यीशुख्रीष्टस्य ज्ञाने युष्मान् अलसान् विफलांश्च न स्थापयिष्यन्ति।
किन्तु यस्यैतानि न विद्यन्ते स स्वचक्षुषी मुद्रित्वा अन्धः सन् स्वयं ९
पूर्व्वपापात् परिष्कृत इति विस्मरति। अतएव हे भ्रातरो यूयं स्वेषां १०
मनोनीतत्वं आहूतत्वञ्च निर्णेतुं यतध्वम्। तत् कृत्वा यूयं कदापि पतिता ११
न भविष्यथ किन्तु विशेषतोऽस्माकं त्रातृप्रभुयीशुख्रीष्टस्यानन्तराज्ये यूयं
सत्कारेण प्रवेशयिष्यध्वे।

यद्यपि यूयम् एतत् सर्व्वं जानीथ, एतदुक्तसत्यकथायां स्थिरास्तिष्ठथ च १२
तथापि युष्मान् तत् सर्व्वदा स्मारयितुम् अहम् आलस्यं न करिष्यामि।
अस्माकं प्रभु यीशुख्रीष्टो मां यादृग् ज्ञापितवान् तदनुसारतः शीघ्रम् १३
एतत्कलेवरदूष्यं मया त्यक्तव्यम् इति विज्ञाय यावद् एतस्मिन् दूष्ये १४
तिष्ठामि तावद् युष्मान् स्मारयित्वा प्रवर्त्तयितुम् अहम् उचितं बुद्धवान्।
अपरम् मम परलोकप्राप्तेः परम् एतद् यथा युष्माभिः स्मरिष्यते तदर्थ- १५
मपि मया यत्नः क्रियते। यस्मिन् समये वयं प्रभो यीशुख्रीष्टस्य पराक्रमं १६
आगमनकथाञ्च युष्मान् अज्ञापयाम तदा कस्यापि कल्पितोपन्यासस्य
कथां न कथयित्वा तस्य महिम्नः प्रत्यक्षसाक्षिणो भूत्वा कथितवन्तः।
वस्तुतस्तु 'यत्र मम परमसन्तोषो मम स प्रियपुत्त्र एषः', एतद् बोधिका १७
विहायसो वाक् महिमयुक्ततेजसस्तं प्रति निर्गता तस्मात् स पितुरी-
श्वरात् सत्कारं गौरवञ्च लब्धवान्। तदा तेन सार्द्धं पवित्रपर्व्वते स्थित्वा १८
स्वर्गान्निर्गतां तद्गगणीयां वाणीं वयं श्रुतवन्तः। तस्मात् स्थिरतरं भविष्यद् १९
वाक्यम् अस्माकम् आस्ते तस्माद् यावद् युष्माकम् अन्तःकरणेषु प्रभातीय-
नक्षत्रस्यारुणस्य चोदयो न भवति तावद् घोरतरान्धकारस्थाने प्रज्व-
लितदीप्तिरिव यद् भविष्यद्वाक्यम् आस्ते तत् प्रति मनोनिधानं युष्माकम्
उचितम्। शास्त्रे लिखितं यद् सर्व्वभविष्यद्वाक्यं तत् कस्यापि स्वाभि- २०
प्रायात् न जातं यतो मानुषाणाम् इच्छातः पूर्व्वं भविष्यद्वाक्यं नोपस्थितवत् २१
किन्त्वीश्वरस्य पवित्रलोकाः पवित्रेणात्मना प्रवर्त्तिताः सन्तः कथितवन्त
इति विशेषेण जानीत।

## २ द्वितीयोऽध्यायः।

१ मिथ्याभविष्यद्वक्तॄन् उद्दिश्य कथनं ४ तेषां दोषो दण्डो धार्म्मिकाणां रक्षायाः कथनञ्च।

१ अपरं पूर्व्वं यथा लोकानां मध्ये मिथ्या भविष्यद्वादिन आसन् तथा
युष्माकं मध्येऽपि मिथ्या उपदेशका भविष्यन्ति; ते स्वेषां क्रेतारं प्रभुम्
अनङ्गीकृत्य गुप्तं विनाशकवैधर्म्यस्य प्रचारणात् स्वयमेव स्वेषाम् अकस्माद्
२ विनाशं घटयिष्यन्ति। अपरम् अनेकेषु तेषां विनाशमार्गं गतेषु तेभ्यः
३ सत्यमार्गस्य निन्दा भविष्यति। अपरञ्च ते लोभात् कल्पितवाक्यै
र्युष्मत्तो लाभं कुर्व्वन्ति किन्तु तान् प्रति पूर्व्वकथितो दण्डः शीघ्रं
४ भविष्यति न चिरात् तेषां विनाशस्य घटिष्यते।

ईश्वरः पापिदूतान् न क्षमित्वा नरके निक्षिप्यान्धकारशृङ्खलैः बद्ध्वा
५ विचारार्थं तान् अस्थापयत्। पुनश्च पुरातनजगत् प्रति न दयां कृत्वा धर्म्म
६ प्रचारकोऽष्टमोजनो यो नोहस्तं रक्षित्वा पापिलोकैः सार्द्धं जगज् जलेऽमज्ज-
ज्जयत्। तथा सिदोम् अमोरानगरञ्च भस्मीकृत्य विनाशदण्डं कृत्वा भवि-
७ ष्यत्पापिनां दृष्टान्तमिव अकरोत्; किन्तु तेषां दुरात्मनां पापाचरणाद्
८ दुःखितो यो धार्म्मिको लोट् तं रक्षितवान्। स धार्म्मिको जनस्तैः पापिभिः
सार्द्धं निवाससमये तेषां पापाचरणं दृष्ट्वा श्रुत्वा दिने दिने मनसि तप्तवान्।
९ ईश्वरः स्वभक्तलोकान् परीक्षात उद्धर्त्तुम् अधार्म्मिकांश्च विशेषतो ये
कामाभिलाषाद् असद् आचरन्ति राजशासनञ्चावजानन्ति तान् दण्ड-
१० यितुं विचारदिनं यावद् रक्षितुं जानाति। ते दुःसाहसिनः स्वेच्छाचा-
११ रिणश्च मानिलोकान् अपमानितुं न बिभ्यति। किन्तु दिव्यदूता-
स्तेभ्यो बलवन्तः पराक्रमिणश्च सन्तोऽपि प्रभोः समक्षं तेषां विरुद्धं काञ्चि-
१२ न्निन्दां कृत्वा नापवदन्ते। धरणार्थं विनाशार्थञ्च जाता ये स्वाभाविका-
ज्ञानपशवस्तद्वद् भूत्वा ते यन्न बुध्यन्ते तन् निन्दित्वा स्वीयस्वीयाधर्म्मफलं
१३ प्राप्य स्वेषां दुष्टतया विनंक्ष्यन्ति। ते दिवा प्रकृष्टभोजनं सुखं जानन्ति
निजकापट्येन सुखभोगिनः सन्तो युष्माभिः सार्द्धं भुक्त्वा कलङ्किनो
१४ दोषिणश्च भवन्ति। अपरं यल्लोचनानि परस्त्रीव्यासक्तानि पापाचरणात्

न निवृत्तानि तादृङ्नयनविशिष्टाः सन्तस्ते चञ्चलमतिलोकान् लोभ-
यित्वा स्वयं लोभे सुशिक्षितमनस्त्वात् शप्ता भवन्ति। ते सरलं पन्थानं १५
परित्यज्य पापस्य पारितोषिके प्रेमकृद् यो बियोरः पुत्रो बिलियम्
तस्य पथः पथिकाः सन्तो जातभ्रमा भवन्ति; स भविष्यद्वक्ता स्वापराधाद्
भर्त्सितोऽभवत् यस्मात् कथयितुम् अशक्तः पशु मानुषभाषया कथां १६
कथयित्वा तदीयोन्मत्तं कर्म्म निषिद्धवान्। ते निस्तोयकूपाः प्रचण्डवात- १७
चालितमेघाश्च तेषां कृते नित्यं घोरतरान्धकारः सञ्चितोऽस्ति। ते मुधा- १८
हङ्कारस्य कथां कथयित्वा शारीरिकसुखाभिलाषैः कामक्रीडाभिश्च
भ्रमाचारिभ्यो मुक्तलोकान् लोभयन्ति। अपरञ्च तेषां सन्निधौ मुक्तिः १९
प्रतिज्ञाकृता भूत्वा स्वयं दुष्टताया दासा भवन्ति; यतो यो जनो येन
पराभवति स एव तस्य किङ्करो भवति। ते यदि त्रातु र्यीशुख्रीष्टस्य २०
ज्ञानेन एककृत्वः संसारीयाशुचिक्रियां परित्यज्य पुनरपि तेन बद्धाः
सन्तः पराभवन्ति तर्हि प्रथमातस्तेषां शेषा गतिरशुभा भवति। यत २१
एकवारं धर्म्मपथं ज्ञात्वा पुनः स्वेषु समर्पितपवित्राज्ञातः पराङ्मुखीभवनाद्
वरं तद्धर्म्मपथस्याज्ञातत्वं तेषामुत्तमम्। किन्तु येयं दृष्टान्तकथा सैव तान् २२
प्रति घटितवती। यथा

'कुक्कुरः स्वीयवान्ताय स्वभावात् परिवर्त्तते।
चालितः शूकरश्चैव कर्दमे परिलुण्ठितुम्।'

---

३ तृतीयोऽध्यायः।

१ ख्रीष्टस्यागमनस्य जगतो दग्धत्वस्य च कथनं १४ धर्म्मम् आचरितुं पितरस्य विनयश्च।

हे प्रियसकला यूयं यथा पवित्रभविष्यद्वक्तृभिः पूर्व्वोक्तानि वाक्यानि प्रभुना १
त्रात्रा प्रेरितानाम् अस्माकम् आज्ञाञ्च स्मरथ तदर्थम् अहं युष्मान् प्रतीदं २
द्वितीयं पत्रं लिखितवान् उभाभ्यां पत्राभ्यां स्मारयित्वा युष्माकं सरल-
मनांसि प्रवर्त्तयामि। प्रथमम् इति जानीत, शेषे काले स्वेच्छाचारिणः ३
कतिपया निन्दका आगत्य कथयिष्यन्ति प्रभोरागमनकथा कुत्र? यतः ४

पितृलोकानां महानिद्रायां सत्यां सृष्टेरारम्भे सर्व्वाणि यथासन् तादृशा-
५ न्येवासते। पूर्व्वम् आकाशमण्डलं जलान्निर्गता जले स्थिता पृथिवी च
६ ईश्वरस्य वाक्येनासृज्येते ततस्तेन तत् जगत् जलाप्लावितं सद् व्यनश्यद्
७ इति ते स्वेच्छया न जानन्ति। किन्त्विदं वर्त्तमानम् आकाशमण्डलं
पृथिवी च तेन वाक्येन विचारस्य कालम् अधार्म्मिकलोकानां विनाशका-
८ लञ्च यावद् वह्नेः कृते सञ्चिते रक्षिते च विद्येते। अतएव हे प्रियाः प्रभोः
समीपे दिनमेकं सहस्रवत्सरवत् सहस्रवत्सराश्च दिनैकवद् इति यूयम्
९ अज्ञाता न भवत। कियन्तो लोका यद्वद् विलम्बं बुध्यन्ते तद्वत् प्रभुः
स्वप्रतिज्ञायां विलम्बं न करोति, कोपि यथा न विनश्यति किन्तु सर्व्व एव
मनांसि परावर्त्तयन्ति इत्यभिलषन् अस्मान् प्रति दीर्घकालं सहते।
१० किन्तु क्षपायां चौरइव प्रभो र्दिनम् आगमिष्यति तदा महाशब्देन
गगणमण्डलं लोप्स्यते तथा महातापेन सर्व्वं मूलवस्तु गलिष्यति पृथिवी
११ तन्मध्यस्थितं सर्व्वं वस्तु च दाहिष्यते। एतत् सर्व्वं यदि लोप्स्यते तर्हि
१२ यदा गगणमण्डलं दग्धं सत् लोप्स्यते महातापेन सर्व्वं मूलवस्तु गलि-
ष्यति तस्येश्वरस्यागामिदिनस्यापेक्षया तदाकाङ्क्षया निखिलपविचाच-
१३ रणैरीश्वरसेवया च युष्माभिः कीदृशै र्लोकै र्भवितव्यम्। किन्तु वयं
तस्याज्ञानुसारेण यस्मिन् धर्म्मस्तिष्ठति तादृशं नवीनम् आकाशमण्डलं
नवीनां पृथिवीञ्चापेक्ष्य तिष्ठामः।

१४ अतएव हे प्रिया यूयमपि तानि सर्व्वाण्यपेक्ष्य येन कलङ्कदोषाभ्यां
१५ रहिताः सन्तस्तस्मात् शान्तिं प्राप्नुयात तादृशं यत्नं कुरुत। अपरञ्च
अस्माकं प्रभो र्दीर्घकालसहनं केवलं परित्राणकारणम् इत्यपि जानीत
अस्माकं प्रियभ्रातरं पौलाय यादृशं ज्ञानम् अदीयत तदनुसारेण
१६ सोपि युष्मान् प्रति पत्रम् अलिखत्। तस्य सर्व्वपत्रेष्वपि एतदर्थकवाक्यानि
कथयति तत्रानेकाः कथा दुर्ब्बोध्याः, तस्मात् येऽशिक्षिताश्चञ्चलाश्च ते
१७ स्वेषां विनाशार्थम् अन्यशास्त्रीयवचनवत् तदर्थान्तरं कुर्व्वन्ति। हे
प्रियतमा यूयम् एताः सर्व्वाः कथाः पूर्व्वं ज्ञात्वा पापिलोकानां भ्रान्त्या

न भ्रमित्वा स्वेषां स्थिरताया यथा पतिता न भवेत तदर्थं सावधाना
भवत। अपरम् अनुग्रहेणास्माकं प्रभोस्त्रातु र्यीशुख्रीष्टस्य ज्ञानेनोत्तरो- १८
त्तरं वर्द्धिष्णवो भवत। इदानीं सर्व्वदा च तस्मै गौरवं भवतु। इति।

---

# योहनः प्रथमं सर्व्वसाधारणपत्रम्।



## १ प्रथमोऽध्यायः।

१ वाद्ख्रीष्टस्य कथनं ५ तेन सार्द्धम् अस्माकं मैत्री तेनास्माकं पापमोचनञ्च।

जीवनवादे यद् आ प्रथमाद् आसीत् यच्च वयं स्वयं संश्रुत्य साक्षाद् १
विलोक्य विविक्तवन्तः स्वहस्तैश्च स्पृष्टवन्तः, एवं यद् अनन्तजीवनं २
पित्रैश्वरेण सार्द्धं स्थित्वास्माकं समीपे प्राकाशत तत् प्रकाशितजीवनं
दृष्ट्वा साक्ष्यं दत्त्वा युष्मान् ज्ञापयामः। अपरम् अस्माभिः सार्द्धं यथा ३
युष्माकं मैत्री भवति तदर्थं यदस्माभि र्दृष्टं श्रुतञ्च तदेव युष्मान् ज्ञाप्यते
यतः पित्रा तस्य पुत्रेण यीशुख्रीष्टेन सार्द्धम् अस्माकं नितान्तं मैत्री
विद्यते। अपरञ्च यथा युष्माकं सम्पूर्णानन्दो जायते तदर्थम् एतानि ४
लिख्यन्ते।

यः सुसंवादस्तस्माद् अश्रावि यश्च युष्माकं सन्निधौ प्राकाशि सोऽयं ५
ईश्वरो ज्योतिस्तत्रान्धकारस्य लेशोऽपि नास्ति। वयम् अन्धकारे भ्रमन्त- ६
स्तेन सार्द्धम् अस्माकं मैत्री विद्यते कथामेतां यदि वदेम तर्हि धर्म्म-
कर्म्मकारिणो न सन्तः केवलम् अतथ्यवादिनो भवेम। किन्तु स यथा ७
ज्योतिर्निवासी तथा वयमपि यदि ज्योतिषि गच्छेम तर्हि परस्परम्
अस्माकं मैत्री विद्यते तदीयपुत्रस्य यीशुख्रीष्टस्य शोणितम् अस्मान
सर्व्वस्मात् पापात् मोचयति च। अपरम् अस्माकं किमपि पापं ८
नास्ति, एतादृशीं कथां यदि वदेम तर्हि स्वयमेव स्वान् वञ्चयेम तथा

९ अस्माकम् अन्तरे सत्यधर्म्मो नास्ति। किन्तु यदि स्वेषां पापानि स्वयम् अङ्गी-
कुर्य्याम तर्हीश्वरोऽस्माकं पापानि चन्तुं सर्व्वस्माद् अधर्म्माद् अस्मान् मोच-
१० यितुञ्च विश्वास्यो न्यायकारी च भवति। अपरञ्च वयं कदापि पापं नाकुर्म्म,
एतादृशीं कथां यदि कथयेम तर्हीश्वरं मृषावादिनं कुर्म्मस्तथास्माकम्
अन्तरे तदीयं वाक्यं न विद्यते।

---

२ द्वितीयोऽध्यायः।

१ अस्माकं पापानां ख्रीष्टस्य प्रायश्चित्तरूपत्वं ४ ईश्वरस्याज्ञापालनात् तदीय-तत्त्वज्ञानस्य चिह्नत्वं ७ परस्परप्रेमकथनं १२ संसारे प्रेमनिषेधः १८ मिथ्या-ख्रीष्टात् सावधानत्वं कर्त्तुं सत्यख्रीष्टे विश्वसितुं निवेदनञ्च।

१ हे प्रियबालकाः केनापि प्रकारेण यथा युष्माकं पापं न जायते तदर्थम्
अहम् युष्मान् प्रतीति कथां लिखामि; यदि तु कश्चित् पापं करोति तर्हि
२ धार्म्मिको यीशुख्रीष्ट ईश्वरस्य निकटेऽस्माकं पक्षपाती विद्यते। अपरं स
केवलम् अस्माकं पापकारणाद् इति नहि निखिलजगतो लोकानां
पापकारणात् प्रायश्चित्तं विद्यते।

३ यदि वयं तदीयाज्ञां पालयामस्तर्हि तं जानीम एतत्स्वयं बोद्धुं
४ शक्नुमः। किन्तु तदीयाज्ञां न पालयन् तं जानामि एतादृशीं
कथां यदि कोपि ब्रवीति तर्हि स सत्यधर्म्मविहीनः सन् मृषाभाषी
५ भवति। यः कश्चित् तस्य कथां पालयति तस्यैवान्तर ईश्वरस्य प्रेम
६ नितान्तं सिद्ध्यति तथात्वे सति वयं तत्र तिष्ठाम इति विद्मः, किन्त्वहं
तस्मिन् तिष्ठामि, एतादृशीं कथां यः कथयति तस्य सदृशो व्यापारस्तेन
कर्त्तव्यः।

७ हे भ्रातरोऽहं युष्मान् प्रति काञ्चिन् नूतनाम् आज्ञां लिखामीति
नहि आदितः पुरातनी याज्ञा विद्यते तामेव लिखामि यूयम् आदितः
८ शृणुथ सैव पुरातनाज्ञा। तदितराम् एकां नवीनाज्ञां लिखामि,
अपरम् अन्धकारो नश्यतीदानीं सत्यज्योतिश्च प्रकाशते, एतद् युष्मान्
९ तञ्चोद्दिश्य सत्यं भवति। किन्तु यः कश्चित् स्वीयं भ्रातरम् ऋतीयमानो

ज्योतिष्यहम्तिष्ठामीति वाक्यं वदति सोऽद्यापि तमिस्रे विद्यते। यः कश्चित् १०
स्वभ्रातरि प्रेम करोति स एव ज्योतिषि तिष्ठति तस्य कोप्यन्तरायो नास्ति।
किन्तु यः कश्चित् स्वभ्रातरम् ऋतीयते सोऽन्धकारे तिष्ठति तथान्धकार- ११
स्तस्य नयनम् अन्धीकरोति तस्मात् स क यातीति ज्ञातुम् अशक्तः सन्
अन्धकार एव भ्रमति।

हे प्रियबालका यूयं तस्य नाम्नो गुणेन पापक्षमां प्राप्तवन्त इति १२
हेतोरहं युष्मान् प्रति लिखामि। हे ताता यूयम् आदितस्तं पर्य्य- १३
चिनुत तस्माद् अहं युष्मान् प्रति लिखामि। हे युवानो यूयं पापात्मानं
जितवन्त इतिकारणाद् अहं युष्मान् प्रति लिखामि। हे प्रियबालका
यूयं पितरं पर्य्यचिनुत तस्मादहं युष्मान् प्रति लिखामि। हे ताता यूयम् १४
आदितस्तं पर्य्यचिनुत तस्मादहं युष्मान् प्रति लिखामि। हे युवानो यूयं
बलवन्त ईश्वरस्य वाक्यं युष्माकम् अन्तरे विद्यते पापात्मानञ्च जितवन्त
इतिहेतोरहम् युष्मान् प्रति लिखामि। यूयं संसारे सांसारिकद्रव्येषु १५
च प्रेम न कुरुत ; यः कश्चित् संसारे प्रेम करोति तस्मिन् पितुः प्रेम न
तिष्ठति। यतः सर्व्वं सांसारिका अर्थात् शारीरिकसुखाभिलाष ईक्षण- १६
सुखाभिलाष वार्त्तमानिकगर्व्वश्च सर्व्वएते पितृतो न जायन्ते संसाराद्
जायन्ते। अपरं संसारस्तदीयसुखभोगश्चानित्यौ किन्तु य ईश्वरस्येच्छां १७
पालयति स नित्यस्थायी।

हे प्रियबालकाः शेषकालोयम् अन्त्यानृतख्रीष्ट उपस्थास्यति ; तद् यूयं १८
यथा श्रुतवन्तस्तथेदानीं बहवो ऽनृतख्रीष्टा जायन्ते तस्माद् अयमेव
शेषकाल इति वयम् जानीमः। ते जना अस्मत्तो निर्गताः किन्त्वस्माकं १९
पक्षीया नाभवन् यतस्तथात्वे सत्यस्माभिः सार्द्धम् अस्थास्यन् ते सर्व्वेऽस्माकं
पक्षीया नहीति यद् व्यक्तो भवति तदर्थं निरगच्छन्। किन्तु पवित्रेणात्मना २०
युष्माकम् एकोऽभिषेकोस्ति तेन यूयं सर्व्वाणि जानीथ। यूयं यत् सत्यधर्म्मं २१
ज्ञानहीना विद्यध्वे तदर्थं युष्मान् प्रति लिखितवान् तन्न किन्तु सत्यधर्म्मं
जानीथ धर्म्ममध्ये किमप्यतथ्यं नास्ति तदपि जानीथ, इतिहेतोर-

२२ लिखम्। योऽभिषिक्तस्त्रातेति यो जनो नाङ्गीकरोति तं विना
कोऽपरोऽनृतभाषी विद्यते? स एव पितरं पुत्रञ्चास्वीकृत्याभिषिक्तख्रीष्टो
२३ भवति। यः कश्चित् पुत्रम् अनङ्गीकरोति स पितरं न प्राप्नोति। अतएव
२४ यूयम् आदितो यां कथां श्रुतवन्तः सा युष्माकम् अन्तरे तिष्ठतु; आ-
दितः श्रुतं तद् वाक्यं यदि युष्माकम् अन्तरे तिष्ठति तर्हि यूयमपि
२५ पितरि पुत्रे च तिष्ठथ। सोऽस्मान् प्रति यस्य प्रतिज्ञाम् अकरोत् तदेवा-
२६ नन्तपरमायुः। ये जना युष्मान् भ्रमयितुम् इच्छन्ति तान् उद्दिश्य
२७ कथामेतां युष्मान् प्रति लिखामि। तेन द्वारा प्राप्तो युष्माकम् अन्तरस्थो-
ऽभिषेको युष्मासु तिष्ठति यत् कश्चिदन्यो युष्मान् उपदिशति युष्माकम्
एतादृक् प्रयोजनं नास्ति स एवाभिषेकः सर्व्वस्मिन् उपदेशयति तथा
सत्यो भवति तत्र मृषालेशोऽपि नास्ति तस्मात् स यद्वद् युष्मान् उप-
२८ देशयति तद्वत् तत्र तिष्ठत। हे प्रियबालका यूयं तत्र तिष्ठत तथात्वे सति
स यदा प्रकाशिष्यते तदा वयम् अक्षोभा भविष्यामः; तथा तस्यागमनसमये
२९ तस्य समीपे न त्रपिष्यामः। अपरञ्च स धार्म्मिक इति यदि जानीथ तर्हि
यो धर्म्मकर्म्म करोति स तस्माज् जात इत्यपि जानीत।

---

३ तृतीयोऽध्यायः।

१ अस्मान् प्रतीश्वरस्यानुग्रहः, तत्कारणात् पापत्यागपरस्पर प्रेम धर्म्मकर्म्मणाम् आवश्यकत्वञ्च।

१ पश्यत वयम् ईश्वरस्य पुत्रत्वेन विख्याता भवाम एतेन पितास्मभ्यं
कीदृक् प्रेम प्रदत्तवान् किन्तु जगतो लोकास्तं नाजानन् तस्माद्
२ अस्मानपि न जानन्ति। हे प्रिया इदानीं वयम् ईश्वरस्य पुत्रा आस्महे
किन्तु पश्चात् किं भविष्याम इति न व्यक्तीभवति तथापि तस्य प्रका-
शितत्वसमये तस्य सदृशा भवाम इति वयं जानीमो यतः स यादृश आस्ते
३ तादृशमेव तं द्रक्ष्यामः। एवं स यादृशः पवित्रस्तेन तदाशाविशिष्टाः
४ सर्व्वे जना आत्मनः पवित्रान् कुर्व्वन्ति। यो जनः पापं करोति स एव

व्यवस्थाम् उल्लङ्घयति यतो व्यवस्थालङ्घनमेव पापम्। अपरञ्च सोऽस्माकं ५
पापहरणार्थम् अवतीर्णवान् तथा तस्मिन् पापं नास्तीति यूयं वित्थ।
यः कश्चित् तस्मिन् तिष्ठति स पापं नाचरति किन्तु यः कश्चित् पापम् ६
आचरति स कदापि तं नापश्यत् नाजानाच्च। हे प्रियबालकाः सावधाना ७
भवत यद् कश्चिद् युष्माकं भ्रमं न जनयेत् यः कश्चिद् धर्म्मम् आचरति
स ख्रीष्टसदृशो धार्म्मिको भवति। किन्तु यः कश्चित् पापम् आचरति स ८
शैतानः सन्तानो भवति शैतान् आदितः पापं करोति किन्तु शैतानः
कर्म्म विनाशयितुम् ईश्वरस्य पुत्त्रोऽवतीर्णवान्। यः कश्चिद् ईश्वराज् ९
जायते तस्यान्तरे तस्य वीर्य्यं तिष्ठति तस्मात् स पापं नाचरति
ईश्वराज् जातत्वात् पापम् आचरितुञ्च न शक्नोति। इत्यनेन क ईश्वरस्य १०
सन्तानः, को वा शैतानः सन्तानः, इति प्रकाशते; यो जनो धर्म्मं नाचरति
स्वीयभ्रातरि प्रेम च न करोति स कदापीश्वराज् जातो नहि। अस्माभिः ११
परस्परं प्रेम कर्त्तव्यम् इमाम् आज्ञां यूयम् आदितः श्रुतवन्तः। किन्तु १२
पापात्मनः सन्तानो यः काबिल् तत्सदृशा मा भवत; स स्वभ्रातरं जघान
कुतस्तं जघान? तस्य स्वकर्म्माणि पापमयानि भ्रातुः कर्म्माणि धर्म्ममयानि
इतिहेतोः। हे मम प्रियभ्रातरो जगतो जना यदि युष्मान् ऋतीयन्ते १३
तेनाश्चर्य्यं न मन्यध्वम्। भ्रातृभिः सार्द्धं प्रेमकरणाद् वयं मृत्युतो जीवनम् १४
उत्तीर्णवन्त इति जानीमः। यः कश्चित् स्वभ्रातरि न प्रीयते स मृत्योरा-
श्रये तिष्ठति। यः कश्चित् स्वभ्रातरम् ऋतीयते स नरघाती भवति तथा १५
नरघातकोऽनन्तपरमायुषो नाधिकारी भवतीति यूयं जानीथ।
सोऽस्मत्कृते स्वीयप्राणानप्युत्सृष्टवान् अनेन प्रेम ज्ञायते तस्माद् भ्रातृगण- १६
निमित्तम् अस्माकमपि प्राणत्यागपण उचितो भवति। नो चेत् सांसा- १७
रिकधनेन धनी सन् स्वभ्रातुर्दैन्यं पश्यन्नपि यदि कश्चित् तं प्रति
स्वीयदयां रुणद्धि तर्हि तस्यान्तरीश्वरस्य प्रेम कथं तिष्ठति? हे मम १८
प्रियबालका वयं केवलं वाचनिकं मौखिकञ्च प्रेम न कुर्व्वन्तः कार्य्येण
सत्यतया च प्रेम करवाम। तस्माद् वयं यत् सत्यधर्म्मस्य पक्ष इति ज्ञात १९

२० त्वात् तस्य समीपे स्वेषां मनांसि सुस्थिराणि करिष्यामः। अस्माकं
मनो यद्यस्मान् दोषिणः करोति तर्हीश्वरोऽस्माकं मनसो महान्
२१ सर्व्वाणि वेत्ति च। हे प्रिया अस्माकं मनो यद्यस्मान् दोषिणो न करोति
२२ तर्हीश्वरस्य समीपेऽस्माकम् अक्षोभं भविष्यति। अपरं वयं यद्यत् प्रार्थयामहे
तत्सर्व्वमेव प्राप्स्यामो यस्मात् तेन दत्ताज्ञा वयं पालयामहे तस्य
२३ गोचरे ग्राह्यं कर्म्म च कुर्म्महे। एवं तत्पुत्रस्य यीशुख्रीष्टस्य नाम्नि प्रतीय
२४ तदाज्ञानुसारेण परस्परं प्रेमास्माभिः कर्त्तव्यम् एषा तदीयाज्ञा। यो
जनस्तदीयाज्ञां पालयति स तस्मिन् तिष्ठति सोऽपि तत्र तिष्ठति; तथा
यद् अस्मासु स तिष्ठति तद् वयं तेन दत्तात्मना जानीमः।

---

## ४ चतुर्थोऽध्यायः।

१ परीक्षां विना सर्व्वेषाम् उपदेशकानाम् अग्राह्यत्वं ७ परस्परं प्रेमकरणस्य फलनिर्णयश्च।

१ हे प्रियसकला एतज्जगतो मध्यं बहवो मिथ्याभविष्यद्वादिन आग-
तवन्तस्तस्माद् यूयं निखिलोपदेशकेषु न विश्वसित किन्तु त ईश्वराद्
२ आगता न वेति तान् परीक्षध्वम्। तेन क ईश्वरस्योपदेशकः, इति ज्ञातुं
शक्ष्यथ वस्तुतो यीशुख्रीष्टो मानुषरूपेणावतीर्णवान् इति यः कश्चिद्
३ उपदेशक अङ्गीकरोति स एव ईश्वराद् भवति। अपरं यीशुख्रीष्टो मानुष-
रूपेणावतीर्णवान् इति यः कश्चिद् उपदेशको नाङ्गीकरोति स ईश्वरान्
नहि किन्तु यद् अनृतख्रीष्टस्य भविष्यदागमनस्य जगत्याम् उपस्थितेश्च
४ कथां श्रुतवन्तः स एष उपदेशकः। हे बालका यूयम् ईश्वराज् जातत्वात्
तान् जितवन्तो यस्माद् युष्माकं सहकारी जनो जगतो सहकारिणोऽपि
५ महान्। ते संसाराज् जाता इतिहेतोः केवलं सांसारिकीं कथां कथयन्ति
६ तथा संसारोऽपि तेषां कथां मन्यते। अपरं वयम् ईश्वराज् जाता यः कश्चिद्
ईश्वरं जानाति स एवास्माकं कथां मन्यते; यः कश्चिद् ईश्वरान्न जातः
सोऽस्माकं कथां न मन्यते; इत्थं वयं सत्योपदेशकं भ्रान्तोपदेशकञ्च ज्ञातुं
शक्नुमः।

हे प्रियसकला वयं परस्परं प्रेम करवाम यतः प्रेम ईश्वराज् जायते ७
तेन यः कश्चित् प्रेम करोति स ईश्वराज् जायते, ईश्वरञ्च जानाति। यः ८
प्रेमतत्त्वं न जानाति स ईश्वरस्य तत्त्वमपि न जानाति यस्माद् ईश्वरः
प्रेमस्वरूपः। वयं यथा परमायुः प्राप्नुयाम इत्यभिप्रायेणेश्वर एतज्जगत् ९
प्रति स्वीयम् अद्वितीयपुत्रं प्रेषितवान् तस्मात् सोऽस्मान् प्रति निजं
प्रेम प्रकाशितवान्। वयम् ईश्वरं प्रति प्रेम कृतवन्त इति नहि किन्तु १०
सोऽस्मासु प्रेम कृत्वास्माकं पापानां प्रायश्चित्तरूपं निजं पुत्रं प्रेषितवान्
इति प्रेमास्पदं भवति। हे प्रिया ईश्वरो यद्यस्मान् प्रति एतावत् प्रेम ११
कृतवान् तर्ह्यस्माभिरपि परस्परं प्रेम कर्त्तव्यम्। कोपि कदापीश्वरं १२
नापश्यत् किन्तु यदि वयं परस्परं प्रेम कुर्य्याम तर्हीश्वरोऽस्माकम् अन्तरे
तिष्ठति, अस्माभिस्तस्य प्रेम च सिद्ध्यति। अपरम् अस्मभ्यं निजात्मनः १३
प्रदानेन स यद् अस्मासु तिष्ठति वयञ्च तस्मिंस्तिष्ठाम इति जानीमः।
एवं पिता जगतः परित्रातारं निजं पुत्रं प्रेषितवान् इति विलोक्य १४
वयं साक्ष्यं दद्मः। तेन यीशुरीश्वरस्य पुत्र इति यः कश्चित् स्वीकरोति १५
स ईश्वरे तिष्ठति, ईश्वरश्च तस्मिन् तिष्ठति। अस्मान् प्रतीश्वरस्य प्रेमास्ति १६
वयम् इति विदित्वा विश्वसिमः; ईश्वरः प्रेमस्वरूपः यश्च प्रेम्नि तिष्ठति
स ईश्वरे तिष्ठति, ईश्वरश्च तस्मिन् तिष्ठति। इत्यम् अस्माकं मध्ये १७
प्रेम सिद्धमस्ति तस्माद् विचारकालेऽस्माकम् अक्षोभं भविष्यति यस्माद्
वयं तत्सदृशाः सन्त एतस्मिन् जगति तिष्ठामः। प्रेम्नि भयं न तिष्ठति १८
किन्तु सिद्धं प्रेम भयं निराकरोति भयेन यातना विद्यते यश्च
बिभेति स प्रेम्ना न सिद्ध्यति। स प्रथमतोऽस्मासु प्रेम कृतवान् इति १९
कारणाद् वयमपि तस्मिन् प्रेम करवामहे। यश्च निजं भ्रातरं २०
द्वितीयमानोऽहमीश्वरे प्रेम करोमीति कथां कथयति स मृषाभाषी
यतः स्वीयं यं भ्रातरम् अपश्यद् यदि तस्मिन् प्रेम न करोति तर्हि यम्
ईश्वरं न दृष्टवान् कथं तस्मिन् प्रेम कर्त्तुं शक्नोति? यश्चेश्वरे प्रेम करोति २१
स स्वीयभ्रातरि च प्रेम कुर्य्याद् एतदाज्ञां वयं तस्माद् लब्धवन्तः।

५ पञ्चमोऽध्यायः।

१ भ्रातृभिः सार्द्धं प्रेमकरणम् ईश्वराज्ञायाः पालनम् ईश्वरस्य प्रेमनिश्चितत्वं १४ ईश्वरस्य स्वकीयलोकानां प्रार्थनाश्रवणं सफलकरणञ्च।

१ यीशुरभिषिक्तत्रातेति यः कश्चिद् विश्वसिति स ईश्वराज्
जातः तथा यो जनयितरि प्रेम करोति स तस्माज् जातजनेऽपि
२ प्रेम करोति। वयं यदेश्वरे प्रेम कुर्म्मस्तदीयाज्ञाश्च पालयामस्तदा
३ तदीयबालकेष्वपि प्रेम कुर्म्म इति जानीमः। ईश्वरस्याज्ञापालनमेव
४ तत्प्रति प्रेम प्रकाशयति तदीयाज्ञाः सर्व्वाः कठिनाश्च न भवन्ति। यः
कश्चिद् ईश्वराज् जातः स जगज् जयति तथा जगज्जयी योऽस्माकं
५ प्रत्ययः स एवास्माकं जयः। यीशुरीश्वरस्य पुत्र इति यः प्रत्येति
६ तं विना जगज्जयी कः? अयम् अभिषिक्तो यीशुः सलिलशोणिताभ्यां
प्रकाशितोऽभवत् केवलजलेन नहि शोणितेनापि प्रकाशितोऽभवत्
७ सत्यतास्वरूपो य आत्मा स तत्र साक्षी विद्यते। यतः पिता वादः पवित्र
८ आत्मा चेति त्रयः स्वर्गे साक्षिणः सन्ति त्रयाणामेतेषाम् एकत्वञ्च। अपरं
जीवात्मा तोयं शोणितं पृथिव्याम् एतत्त्रयं साक्ष्यास्ते, एतत्त्रयस्य साक्ष्य-
९ मेकम्। यदि वयं मानुषाणां साक्ष्यं गृह्णीयाम तर्हीश्वरस्य साक्ष्यं तस्मात्
श्रेष्ठं भवति, एवम् ईश्वरः स्वपुत्रं प्रति यत् साक्ष्यम् अददात् तदीश्वरस्य
१० साक्ष्यं। यः कश्चिद् ईश्वरस्य पुत्रे विश्वसिति स स्वान्तरे तत् साक्ष्यं प्राप्नोति
किन्तु यः कश्चिद् ईश्वरे न विश्वसिति स तं मृषाभाषिणं करोति यत ईश्वरः
११ स्वपुत्रं प्रति यत् साक्ष्यम् दत्तवान् तत्र नाविश्वसित्। अपरम् ईश्वरोऽस्म-
भ्यम् अनन्तपरमायु र्दत्तवान् तत् परमायुस्तस्य पुत्रे विद्यते एतत् तस्य
१२ साक्ष्यं। यः कश्चित् पुत्रं गृह्णाति स परमायुः प्राप्नोति किन्तु यः
१३ कश्चिद् ईश्वरस्य पुत्रं न गृह्णाति स परमायु र्न प्राप्नोति। युष्माकम्
अनन्तपरमायुरास्ते इति विज्ञायेश्वरस्य पुत्रस्य नाम्नि यद् विश्वासेन
तिष्ठथ तदर्थम् ईश्वरस्य पुत्रस्य नाम्नि विश्वासिनो युष्मान् प्रतीमां कथाम्
अहम् अलिखम्।

१४ वयं यदि तदीयेच्छानुसारेण किमपि प्रार्थयेमहि तर्हि सोऽस्माकं

तत्प्रार्थनां शृणोति तं प्रत्यस्माकम् एतादृशो दृढविश्वासो विद्यते। अप- १५
रञ्च सोऽस्माकं निवेदनं शृणोति, इति यदि जानीयाम तर्हि तस्य
निकटे यत् प्रार्थयेमहि, तदेवास्माकं भविष्यति, इत्यपि वयं जानीमः।
कश्चिद् यदि स्वीयभ्रातरम् अमृत्युजनकं पापं कुर्व्वन्तं पश्यति तर्हि १६
तदर्थं प्रार्थयिष्यते तेन ईश्वरस्तस्मै मृत्युजनकं पापं न कृतवान् ईश्वरस्तस्मै
जीवनं दास्यति ; मृत्युजनकम् एकविधं पापम् आस्ते किन्तु तत् पापे तेन
प्रार्थना कर्त्तव्या इत्यहं न वदामि। सर्व्व एवाधर्म्मः पापं किन्तु १७
किमपि पापं मृत्युजनकं न भवति। यः कश्चिद् ईश्वराज् जातः १८
स पापं नाचरन् स्वं रक्षति पापात्मा तं न स्पृशति च, इति वयं जानीमः।
अपरञ्च वयम् ईश्वराज् जाता इतरे सर्व्वे जगज्जनाः पापात्मनो १९
वशीभूय तिष्ठन्ति इत्यपि जानीमः। पुनश्च सत्यमयेश्वरस्य तत्त्वं २०
ज्ञापयितुम् ईश्वरस्य पुत्रोऽवतीर्य्यास्मभ्यं ज्ञानम् अददात् तदपि
जानीमः, तथा वयं तस्य सत्यमयेश्वरस्य तत्पुत्रस्य यीशुख्रीष्टस्य चाश्रये
तिष्ठामः ; स सत्यमय ईश्वरोऽनन्तपरमायुःस्वरूपश्च भवति। हे प्रियबालका २१
यूयं देवमूर्त्तिभ्यः स्वान् रक्षत। इति।

---

# योहनो द्वितीयं पत्रम्।

## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं ४ प्रेम्नि धर्म्माचरणे च नित्यप्रवर्त्तनं मिथ्योपदेशात् सावधानत्वं
१२ समाप्तिश्च।

हे प्रभ्वि इकुलिके प्राचीनोऽहं त्वां प्रति तव पुत्रांश्च प्रति पत्रं १
लिखामि युष्मासु सत्यप्रेम करोमि नाहं केवलो ये लोकाः सत्यधर्म्मं
जानन्ति ते सर्व्वएव प्रेम कुर्व्वन्ति। अस्माकम् अन्तरे यः सत्यधर्म्म आस्ते २
सर्व्वदैव स्थास्यति च तदर्थं प्रेम करोमि। पितेश्वरस्तस्य पुत्रो यीशु- ३
ख्रीष्टश्च युष्मभ्यं सत्यधर्म्मेण प्रेम्ना च सार्द्धम् अनुग्रहं शान्तिञ्च क्रियास्ताम्।

४ वयं पित्रतो याम् आज्ञाम् प्राप्नुम तदनुसारेण त्वदीया बालकाः
५ सत्यधर्म्मम् आचरन्ति इति विज्ञायाहं भृशम् आनन्दितवान्। साम्प्रतं
हे आर्य्ये त्वां प्रति काञ्चिन् नवीनाम् आज्ञां लिखामि तन्न किन्तु परस्परं
प्रेम कर्त्तव्यं यामिमाम् आज्ञां वयम् आदितः प्राप्नुम तामेव ज्ञापयामः।
६ एतदाज्ञानुसारतोऽस्माकं यद् आचरणं तत्त प्रेमास्ति तथा यूयम् आ-
७ दितो यां श्रुतवन्तस्तदनुसारेणाचरत, एषा तस्याज्ञा विद्यते। किन्तु
बहवः प्रवञ्चकाः संसारम् आगत्य मानुषरूपिणो यीशुख्रीष्टस्यावतारं न
८ स्वीकुर्व्वन्ति त एव लोकाः प्रवञ्चका अनृतख्रीष्टाश्च। अतएवास्माकं पूर्व्व-
कृतानि कार्य्याणि यथा विफलानि न भवन्ति वरं तत्पारितोषिकं
९ सम्पूर्णं प्राप्नुयाम तदर्थं यूयं स्वीयस्वीयकार्य्ये सावधाना भवत। यः कश्चिद्
आज्ञालङ्घनं कृत्वा ख्रीष्टस्योपदेशे न तिष्ठतीश्वरेण सार्द्धं तस्य सम्बन्धो
नास्ति किन्तु यः कश्चित् ख्रीष्टस्योपदेशे तिष्ठति स एव पितुः पुत्त्रस्य च
१० सम्बन्धीयो लोकः। यदि कश्चिद् इमम् उपदेशं न गृहीत्वा युष्माकं
समीपम् आयाति तर्हि तस्यातिथ्यं न कुरुत, एवं मङ्गलं भूयाद् इति
११ कथां तस्मै न कथयत। यतो मङ्गलं भूयाद् एतां कथां यः कश्चित् तस्मै
कथयति स तस्य दुष्कर्म्मणोंऽशी भवति।

१२ अनेकाः कथा मया युष्मान् प्रति लेखितव्याः किन्तु पत्रेण मस्या च
तत् कर्त्तुं नेच्छामि, अस्माकम् आनन्दं सम्पूर्णं कर्त्तुं युष्माकं समीपं गत्वा
१३ सम्मुखीभूय कथां वार्त्ताञ्च कथयामीति मदीया प्रत्याशा विद्यते। तव
मनोनीतभगिन्या बालकास्त्वां नमस्कारं ज्ञापयन्ति॥ इति॥

# योहनस्तृतीयं पत्रम्।



१ मङ्गलाचरणं, अतिथिनिमित्तं योहना गायस्य प्रशंसा ९ दियत्रिफिं प्रति भर्त्सनं दीमीत्रियस्य प्रशंसा १३ समाप्तिश्च।

प्राचीनोऽहं यस्मिन् प्रियतमगाये सत्यत्वेन प्रेम करोमि तं प्रति पत्रं १
लिखामि। हे प्रिय सर्व्वत्र तव मङ्गलं भूयात्, यद्वद् आत्मनि तद्वत् २
शरीरे च स्वास्थ्यं भूयाद् इति मम प्रार्थना। आगतभ्रातृणां वदनेभ्यो ३
युष्माकं सत्यधर्म्मग्रहणस्य सत्यधर्म्माचरणस्य च प्रमाणं प्राप्याहं महान-
न्दितोऽभवम्। मम बालकाः सत्यधर्म्मम् आचरन्ति, एतद्वार्त्ताश्रवणतो ४
ममानन्दास्पदं महत्तरं नास्ति। हे प्रिय त्वं भ्रातॄन् अपरिचितलोकांश्च ५
प्रति यद्यत् कर्म्माकरोः तत् सर्व्वं श्रद्धया कृतवान्। ते समाजस्य साक्षात् ६
तव प्रेम्नः प्रमाणं दत्तवन्तस्त्वं यदि यात्राकाले तेभ्य ईश्वरस्य योग्यं
पाथेयद्रव्यं ददासि तर्हि सत्कार्य्यं करिष्यसि। यतस्त ईश्वरस्य ७
नाम्नोतरदेशीयानां समीपे किमपि न गृहीत्वा यात्राम् अकुर्व्वन्।
अतएव सत्यधर्म्मस्य सहायार्थम् एतादृशलोकानाम् आतिथ्यम् अस्माभिः ८
कर्त्तव्यम्।

अहं समाजं प्रति पत्रम् अलिखिष्यं किन्तु दियत्रिफिस्तस्य समाजस्य ९
मुख्यो भवितुम् इच्छन् अस्मान् अग्राह्यान् करोति सोऽस्मान् उद्दिश्य
बहूनि दुर्व्वाक्यानि च वदति तथा तेनापि न तृप्तत्वाद् भ्रातॄनां स्वयम् १०
आतिथ्यं न करोति यद्यन्ये कर्त्तुमिच्छन्ति तानपि निषेधति समाजाद्
वहिष्करोति च तस्माद् अहं यदा गमिष्यामि तदा यान्येतानि कर्म्माणि
करोति तानि तं स्मारयिष्यामि। हे प्रिय त्वम् असत्कर्म्मणोऽनुगामी न ११
सन् सत्कर्म्मणोऽनुगामी भव यः कश्चित् सत् कर्म्म करोति स ईश्वराज्

१२ जातः किन्तु यः कुकर्म्म करोति स ईश्वरं न जानाति। सर्व्वमनुष्यैः
सत्यधर्म्मेण च दीमीत्रियस्य सुख्यातिर्भवति तथा वयञ्च प्रमाणं दद्मः
अपरम् अस्माकं प्रमाणं यत् सत्यं तत् यूयं जानीथ।
१३ अनेकाः कथा मया युष्मान् प्रति लेखितव्याः किन्तु मसीलेखन्या च
१४ लेखितुं नेच्छामि। तूर्णं त्वां द्रष्टुम् आभिमुख्येन कथां वार्त्ताञ्च कथयितुं
१५ मम प्रत्याशा विद्यते; तव मङ्गलं भूयात्। अस्माकं मित्राणि तुभ्यं
नमस्कारं कुर्व्वन्ति त्वमपि एकैकस्य नाम प्रोच्य मित्रेभ्यो नमस्कुरु।

---

# यिहूदासर्व्वसाधारणपत्रम्।



१ मङ्गलाचरणं ३ धर्म्मस्थिरत्वं दुष्टशिक्षकाणां पापं दण्डश्च २० यिहूदाविनयकथनं
२४ मङ्गलप्रार्थना च।

१ ये तातेनेश्वरेण पवित्रीकृता यीशुख्रीष्टेनाहूता रक्षिताश्च भवन्ति
तान् प्रति यिहूदानामा याकुबो भ्राता यीशुख्रीष्टस्य दासः पत्रं
२ लिखति। युष्मान् प्रति दयाशान्तिप्रेमाणि बाहुल्येन भूयासुः।
३ हे प्रिया यदाहं युष्मान् प्रति साधारणपरित्राणस्य कथां लिखितुं
बहु यतितवान् तदा पूर्व्वकालीनपवित्रलोकेषु समर्पितो यो धर्म्मस्तदर्थं
यूयं प्राणव्ययेनापि यत्नं कुरुत· विनयेनावश्यम् इतिपत्रं लेखितव्यम्
४ इति बुद्धवान्। यस्मात् दण्डं प्राप्तुं पूर्व्वलिखिताः कियन्तो जना गुप्तं
युष्माकं मध्यं प्रविशन्ति, एतेऽधार्म्मिकलोका अस्माकम् ईश्वरस्या-
नुग्रहस्योपरि भारं समर्प्य लम्पटतादि कुर्व्वन्ति प्रभुम् अद्वितीयेश्वरम्
५ अर्थाद् अस्माकं प्रभुं यीशुख्रीष्टं अपह्नुवते च। एताः सर्व्वाः कथा
ज्ञातानपि युष्मान् स्मारयितुम् इच्छामि; परमेश्वरेण मिसरदेशात्

स्वीयलोकेषु समुद्भूतेषु ये जना अविश्वासिन आसन् स तान् व्यनाशयत्।
अपरं दिव्यदूताः स्वस्वपदेषु न स्थित्वा वासस्थानानि परित्यक्तवन्तस्तस्माद् ६
ईश्वरस्तान् महाविचारकालं यावद् अनन्तकालस्थायिना बन्धनेन
बद्ध्वा घोरान्धकारमध्ये स्थापितवान्। तद्वत् सिदोम् अमोरा तन्निकटस्थ ७
नगरनिवासिनश्च वेश्यागमनपुंमैथुनकारणाद् अनिर्व्वाणवह्नौ दण्डं
भुक्त्वा दृष्टान्तादिवाभवन्। एतेऽधार्म्मिका एतादृशलोकास्ते भ्रमं निद्रिताः ८
सन्तः शरीरम् अशुचि कुर्व्वन्ति तथा राजत्वपदम् अवज्ञायान्यदुच्चपदं
निन्दन्ति। किन्तु यस्मिन् समये मीकायेल्नामा प्रधानदिव्यदूतो मुसा- ९
शरीरार्थं शैताना सार्द्धम् उत्तरं प्रत्युत्तरञ्च कृतवान् तत्समये स तद्विरुद्धं
निन्दायुक्तम् अपवादम् अकृत्वा केवलां कथामेताम् अकथयत् परमे-
श्वरस्त्वां तिरस्करोतु। तथापि ते यस्य तत्त्वं न विदन्ति तन्निन्दन्ति १०
किन्तु ज्ञानहीनपशवइव स्वभावतो यद् बुध्यन्ते तेन विनश्यन्ति। हा हा ते ११
काबिल्इव विपथगामिनो भूत्वा पारितोषिकार्थं बिलियमो भ्रान्त्या
भ्रमन्ति तथा कोरहस्याज्ञालङ्घनेन विनश्यन्ति। ते जना यदा युष्माभिः १२
सार्द्धं भुञ्जते तदा निर्भयम् अधिकभोजनाद् युष्माकं प्रेमभोज्ये सकलङ्का
जायन्ते। ते वायुना चालिता निस्तोयमेघाइव तथा द्विर्म्मृता मूलोत्पा- १३
टिताः फलहीनाः शुष्कवृक्षाइव, एवं लज्जाफेणविस्तारिसमुद्रप्रचण्डतर-
ङ्गाइव पुनश्च येषां कृते घोरान्धकारः सर्व्वदा स्थापित आस्ते, तादृशानि
भ्रमन्ति नक्षत्राणीव भवन्ति। अपरञ्च आदमतः सप्तमपुरुषो यो हनोक् १४
स भविष्यद्वाक्येन तान् उद्दिश्य इति कथितवान्। यथा

१५ 'पश्य तेषान्तु पापिष्ठा अधर्म्मकर्म्मकारिणः।
प्रभो र्विरुद्धदुर्व्वाक्यं कठोरं प्रवदन्ति ये।
विज्ञाप्य सकलान् दोषान् शास्तितुं तानधार्म्मिकान्।
पवित्रैरयुतैर्लोकैः सार्द्धमायास्यति प्रभुः।'

ते वाक्कलहकारिणो दुर्म्मुखाः स्वेच्छाचारिणश्च सन्तः सगर्व्ववाक्यं वदन्ति १६
तथा लाभार्थं मनुष्यान् स्तुवन्ति। हे प्रिया यूयमस्माकं प्रभो र्यीशुख्रीष्टस्य १७

१८ प्रेरितानां पूर्व्वोक्तम् उपदेशं स्मरत ; यतः स्वेषां कुत्सिताभिलाषानुसारेण
आचरित्वा शेषे निन्दका भविष्यन्ति, एतां कथां ते युष्मभ्यं कथितवन्तः।
१९ एते लोका स्वान् पृथक् कृत्वा सांसारिका आत्महीनाश्च भवन्ति।
२० हे प्रिया यूयं स्वेषाम् अतिपवित्रधर्म्मे स्वान् स्थिरीकृत्य पवित्रेणात्मना
२१ प्रार्थयध्वम् ; एवम् अनन्तपरमायुषा सार्द्धम् अस्माकं प्रभो र्यीशुख्रीष्टस्य
२२ कृपाम् अपेक्षमाणा ईश्वरस्य प्रेम्ना स्वान् रक्षत। अपरं विशिष्य कियतो
२३ लोकान् दयध्वम् एवं कतिपयलोकान् भयं प्रदर्श्य वह्नित आकृष्येव रक्षत
किन्तु मांसस्य कलङ्केन कलङ्कितं यद् वस्त्रं तद् ऋतीयध्वम्।
२४ अपरञ्च युष्मान् पतनाद् अवितुं महानन्देन स्वीयतेजसः साक्षात्
२५ निर्दोषान् स्थापयितुञ्च समर्थो योऽद्वितीयः सर्व्वज्ञस्त्रायक ईश्वरस्तस्य
गौरवं महिमा पराक्रमः शासनञ्चानन्तकालेषु प्रकाशन्ताम्॥ इति॥

---

# योहनं प्रति प्रकाशितं भविष्यद्वाक्यम्।

## १ प्रथमोऽध्यायः।

१ आभासः ४ मङ्गलाचरणं ७ ख्रीष्टस्यागमनकथनं ९ योहनो बन्धनकथनं ख्रीष्टस्य दर्शनं सप्तप्रदीप स्वरूप सप्तसमाजानां दर्शनञ्च।

१ यत् प्रकाशितं वाक्यम् ईश्वरो यीशुख्रीष्टे समर्पितवान् तत् स स्वीय-
सेवकान् शीघ्रभाविघटनां ज्ञापयितुम् स्वीयदिव्यदूतं प्रेष्य निजसेवकं
२ योहनं ज्ञापितवान्। योहन् ईश्वरस्य वाक्ये ख्रीष्टस्य साक्ष्ये च यद्यद्
३ दृष्टवान् तस्य प्रमाणं दत्तवान्। यो जनः पठति ये च भविष्यद्वाक्यानी-
मानि शृण्वन्ति लिखिता आज्ञाश्च पालयन्ति ते धन्याः, यतः काल
उपतिष्ठति।

योहन् आशियादेशस्थान् सप्तसमाजान् प्रति पत्रं लिखति। यो ४
वर्त्तमानो भूतो भविष्यन् एतत्त्रिकालस्वरूपः, एवं यस्य सिंहासनस्य ५
सम्मुखस्थाः सप्तात्मानः यश्च विश्वास्यसाक्षिस्वरूपः मृतलोकानां प्रथम-
जातफलस्वरूपश्च एतादृशः पृथिव्या राजाधिराजो यीशुख्रीष्टो युष्मभ्यम्
अनुग्रहं शान्तिञ्च प्रदेयात्। योऽस्मासु प्रेम कृत्वा निजशोणितेन कलुषाणि ६
प्रक्षाल्य निजपितुरीश्वरस्य सन्निधौ राजत्वेन याजकत्वेन चास्मान् संस्था-
पितवान् तस्य महिमा पराक्रमश्च सर्व्वदा प्रकाशताम्।

पश्यत स मेघम् आरुह्यागच्छति सर्व्वे 'त द्रक्ष्यन्ति ये जनास्तं ७
विद्धवन्तस्तेऽपि द्रक्ष्यन्ति तथा देशस्थाः सर्व्ववंशीयलोकास्तं वीक्ष्य हा हा
वदिष्यन्ति। इत्थं भूयात्। अपरं वर्त्तमानभूतभविष्यत्त्रिकालस्वरूपः ८
सर्व्वशक्तिमान् यः प्रभुः स इति कथयति, अहं कः क्षश्च, अर्थाद् आद्यन्त-
स्वरूपः।

यीशुख्रीष्टस्य क्लेशस्य राज्यस्य धैर्य्यस्य च सहभागी युष्माकं भ्राता ९
योहन्नामाहम् एकदा ईश्वरस्य वाक्यहेतो यींशुख्रीष्टस्य साक्ष्यहेतोश्च
पात्मनामक उपद्वीप आसम्। तत्र प्रभो र्दिनेऽहम् आत्मनाविष्ट आसम् १०
तदा मम पश्चाद्भागात् तूर्य्याः शब्दम् इव एतद्वाक्यमयं महारवम् अश्रौ-
षम् अहं कः क्षश्चार्थाद् आद्यन्तस्वरूपः, इदानीं यद् दर्शनं त्वं प्राप्नो- ११
षि तत् पत्रे लिखित्वा आशियादेशस्थानाम् इफिस-स्मुर्णा-पर्गाम-थुया-
तीरा-सार्द्दि-फिलादिल्फिया-लायदिकेयासमाजानां समीपं प्रेषय। मां १२
प्रतीत्थं कथिते सति तद् दर्शनार्थम् मयि परावृत्ते सति सप्तसुवर्ण-
प्रदीपान् अहम् अपश्यम्। एवं सप्तसुवर्णप्रदीपानां मध्ये मनुष्यपुत्रमिवैकं १३
जनं दृष्टवान् तस्यापादं वाससाच्छन्नं वक्षसि च सुवर्णपट्टुका बद्धास्ते।
अपरं मेषलोमसदृशा हिमवच्च तदीयशिरसः केशाः पाण्डरा एवं वह्नि- १४
शिखावत् समुज्ज्वलनयने; मुषायां परिष्कृतसुपित्तलवत् तदीयपादौ १५
तथा गभीरजलकल्लोलइव तदीयशब्दः, एवं तदीयहस्ते सप्तनक्षत्राण्यासते १६
तदीयवदनाच्च द्विधारं तीक्ष्णम् अस्त्रं निर्गच्छति तथा मध्याह्नकालीन-

१७ प्रचण्डसूर्य्यइव तस्य वदनं उज्ज्वलति। तं दृष्ट्वाहं मृतकल्पोभूत्वा तच्चर-
णयोः पतितवान् किन्तु स मम गात्रे दक्षिणकरं निधाय कथितवान् मा
१८ भैषीः, अहम् आद्यन्तस्वरूप एवं मृतो भूत्वा पुनर्जीवितवान् तथा पश्चादहम्
अनन्तकालजीवी विद्ये मम हस्ते मृत्योः परलोकस्य च कुञ्जिका विद्यते।
१९ त्वं यद्यद् दृष्टवान् यद् वर्त्तमानं भविष्यच्च तत् सर्व्वं लिख। मम
२० दक्षिणहस्ते यानि सप्तनक्षत्राणि सप्तसुवर्णप्रदीपांश्च पश्यसि तेषाम्
अर्थोयं सप्तनक्षत्राणि सप्तसमाजानां दूतस्वरूपाः, एवं सप्तसुवर्णप्रदीपाः
सप्त समाजाः।

---

२ द्वितीयोऽध्यायः।

१ इफिसीयसमाजं प्रति ख्रीष्टस्य कथनं ८ स्मुर्णासमाजं प्रति कथनं १२ पर्गाम-समाजं प्रति कथनं १८ थुयातीरासमाजं प्रति कथनञ्च।

१ इफिसीयनगरस्थसमाजस्य दूतस्य समीपम् एतादृशं लिखितं प्रेषय, यो
दक्षिणकरेण सप्त नक्षत्राणि धारयति तथा सप्तानां सुवर्णप्रदीपानां मध्ये
२ गमनागमने करोति स त्वां प्रतीत्थं कथयति। त्वं यादृशं कर्म्म परिश्रमं
धैर्य्यञ्च कृतवान् दुष्टानां कर्म्म सोढुञ्च न शक्नोषि तथा ये स्वान् प्रेरितान्
वदन्ति किन्तु वास्तविकाः प्रेरिता न भवन्ति तान् मृषाभाषिणो न्यश्चिनोः;
३ एवं न क्लाम्यन् मम नामहेतोः परिश्रम्य धैर्य्यम् अवलम्ब्य बहु सोढवान्
४ एतानि सर्व्वाणि जानाम्यहम्। तथापि तव विरुद्धं मम किञ्चित् कथयि-
५ तव्यम् आस्ते यतस्त्वं स्वीयपूर्व्वप्रेम परित्यक्तवान्। कस्मात् तव पतनम् अभूद्
इति स्मृत्वा मनः परावर्त्त्य पूर्व्वीयं कर्म्म कुरु किन्तु यदि मनो न परावर्त्त-
६ यसे तर्ह्यहं तूर्णम् आगत्य तव प्रदीपं स्वस्थानाद् दूरीकरिष्यामि। किन्तु
निकलायतीयलोकानां यत् कर्म्माहम् ऋतीये तत् त्वमपि ऋतीयसे, एष
७ तव विशेषो गुणोस्ति। समाजान् प्रति य़ां कथाम् आत्मा कथयति यस्य
कर्णौ स्तः स तां शृणुयात्; यो जनो जयति तस्मा अहम् ईश्वरस्योद्यानोत्-
पन्नपादपस्य फलं भोक्तुं दास्यामि।

अपरं स्मुर्णानगरस्थसमाजस्य दूतस्य समीपम् एतादृशं लिखितं ८
प्रेषय; य एकक्षणे मृतो भूत्वा पुनर्जीवितवान् एतादृश आद्यन्तस्वरूपः
प्रभुस्तुभ्यम् इत्थं कथयति। तव कर्म्म क्लेशं दीनताञ्चाहम् जानामि तथापि ९
त्वदीयं धनं विद्यते तथा ये वास्तविका यिहूदिनो न सन्तोपि स्वान्
यिहूदिनो वदन्ति तथा शैतानः सभास्था लोका भवन्ति तेषां निन्दा-
मप्यहं जानामि। यद्यद् दुःखं भोक्तव्यं तत्त्वं शङ्कां मा कार्षीः पश्य शैतान् १०
परीक्षार्थं युष्माकं कांश्चित् कारायां समर्पयिष्यति, एवं युष्माकं तद् दुःखं
दशदिनानि भविष्यति किन्तु यदि मरणं यावद् विश्वास्यः सन् तिष्ठसि
तर्हि तुभ्यम् अनन्तजीवनं किरीटम् अहं प्रदास्यामि। समाजान् प्रति यां ११
कथाम् आत्मा कथयति यस्य श्रोत्रे आसाते स तां शृणुयात्; यो जनो
जयति स द्वितीयमृत्युना न हिंसिष्यते।

अपरं पर्गामनगरस्थसमाजीयदूतस्य समीपम् इत्थं लिखितं प्रेषय; १२
द्विधारतीक्ष्णखड्गधारी तुभ्यं कथामेतां कथयति। तव कर्म्म तथा यत्र शैतानः १३
सिंहासनं तत्र तव वसतिः, एवं यदा आन्तिपानामा मम विश्वास्यः साक्षी
शैतानो निवासस्थाने युष्माकं मध्ये हतोऽभवत् तदा मम नाम मानित्वा
मम धर्म्मस्यास्वीकारं न कृतवान् एतान्यहं जानामि। तथापि तव विरुद्धं १४
मम किञ्चिद् वक्तव्यमस्ति यतो यो जनो देवताप्रसादादनं परदार-
गमनबाधाञ्च इस्रायेलः सन्तानानां सम्मुखे स्थापयितुं बालकं राजानम्
अशिक्षयत् तस्यैव बिलियमो मतावलम्बिभ्यस्त्वं स्थानं दत्तवान्। अपरं १५
मम घृण्यं यन् निकलायतीयानां मतं तन्मतावलम्बिभ्योपि त्वम् आश्रयं
दत्तवान्। मनः परावर्त्तय नो चेत् तूर्णं तव समीपम् आगत्य जिह्वा- १६
खड्गेन त्वया सार्द्धं योत्स्यामि। समाजान् प्रति यां कथाम् आत्मा कथयति १७
यस्य कर्णौ विद्येते स तां शृणुयात्; यो जनो जयति तस्मा अहं गुप्तमान्नां
भोक्तुं दास्यामि तथा गृहीतारं विनान्यैर्येन्नावगम्यते तादृशं नाम यत्र
मुद्राङ्कितं तं पाण्डरप्रस्तरं तस्मै दास्यामि।

अपरं थुयातीरानगरस्थसमाजीयदूतं प्रतीत्थं लिखितं प्रेषय; १८

१९ वह्निशिखासदृशदृग्वान् सुपित्तलसदृशचरणवान् य ईश्वरस्य सुतः स
तुभ्यम् इमां कथां कथयति तावकीनकर्म्मप्रेमसेवनविश्वसनधैर्य्याणि
सर्व्वाण्येतानि च प्रथमतः शेषेऽतिशयत्वेन भवन्ति तदहं वेद्मि।
२० तथापि त्वद्विरुद्धं मया किञ्चिद् वक्तव्यमस्ति यत ईषेबल्नामिका या
योषित् स्वां भविष्यद्वादिनीं मन्यमाना मदीयान् किङ्करान् वेश्यागमनं
२१ देवप्रसादभक्षणञ्च शिक्षयति भ्रमयति च तस्याः कर्म्म त्वया सह्यते। एवं
व्यभिचारकर्म्मतो मनः परावर्त्तयितुं तस्यै समये दत्तेपि सा मनो न
२२ पर्य्यवर्त्तयत। पश्य सा ये च तया सार्द्धं व्यभिचारकर्म्माकुर्व्वन् तेपि
स्वक्रियाकारणाद् यदि मनांसि न परावर्त्तयन्ते तर्हि तया सार्द्धं
महता कष्टेन शयनस्थास्तेवो मया करिष्यन्ते मृत्या तस्यास्तनया
२३ विनाशिष्यन्ते च। तेनैव मया यत् चित्तमनसी परीक्ष्येते युष्माकम्
एकैकाय स्वीयस्वीयकर्म्मानुरूपं फलं दीयते च तत् सर्व्वैः समाजै र्वेत्तुं
२४ शक्ष्यते। किन्तु युष्माकं मध्ये थुयातीरानगरस्थानां निखिलानां वा
मध्ये ये जना एतया शिक्षया शिक्षिता न भवन्ति यच्च लोकैः शैतानो
निगूढम् उच्यते तन्न विदुस्ते मयोच्यन्ते, युष्मभ्यम् अहं पुनः कमपि भारं
२५ न दास्यामि; किन्तु युष्माकं यदस्ति तन् मदागमनपर्य्यन्तं यत्नेन स्थापयत।
२६ यो जनो जित्वा शेषं यावन् मदीयं कर्म्म पालयिष्यते यद्वद् अहं तातत:
२७ प्राप्तवान् तद्वत् तस्मै भिन्नदेशीयेष्वाधिपत्यं दास्यामि; ततस्तेनायसदण्डेन
२८ तेषु शासितेषु ते कुलालस्य मृद्भाजनवत् चूर्णीभविष्यन्ति। एवं तस्मै
२९ प्रभातीयां तारां प्रदास्यामि। समाजेभ्य आत्मा यां कथां कथयति यस्य
श्रुती आसाते स तां शृणुयात्।

---

३ तृतीयोऽध्यायः।

१ सार्द्दिसमाजं प्रति कथनं ७ फिलादिल्फियासमाजं प्रति कथनं १४ लाय-
दिकेयासमाजं प्रति कथनञ्च।

१ अपरं सार्द्दिनगरीयसमाजस्य दूतं प्रतीत्थं लिखितं प्रेष्य; यस्य
समीप ईश्वरस्य सप्तात्मानः सप्त नक्षत्राणि च सन्ति स तुभ्यम् एतां कथां

कथयति,मया त्वदीयाः क्रिया ज्ञायन्ते,तथा त्वं यज्जीवसि तन्नाममात्रं
किन्तु नितान्तं मृतोऽसीति च ज्ञायते। सावधानो भूत्वा अवशिष्टानि २
लुप्तप्रायाणि कर्म्माणि सबलानि कुरु यत ईश्वरेण त्वदीयं कर्म्म निर्दोषं न
दृष्टं। अतएव त्वया कथं श्रुतं प्राप्तञ्च तत् स्मर्य्यताम् एवं तत् पालयित्वा ३
मनः परावर्त्त्यताम्। यदि त्वं सावधानो न भवसि तर्ह्यहं स्तेनइव तव
समीप उपस्थास्यामि कस्मिन् दण्डे उपस्थास्यामीति च ज्ञातुं न शक्ष्यसि।
ये जनाः परिधेयवसनानि मलीमसानि नाकुर्व्वन् तादृशाः कतिपय- ४
लोकाः सार्दिनगरे विद्यन्ते ते योग्यपात्रत्वात् पाण्डरपटयुक्ताः सन्तो
मया सह गमनागमने करिष्यन्ति। यो जनो जयति स पाण्डरपटान्वितो ५
भविष्यति,एवं जीवनपुस्तकात् तस्य नाम न लोपयित्वा मम पितुस्तदीय-
दिव्यदूतानाञ्च समक्षं तदीयं नाम स्वीकरिष्यामि। समाजं प्रति यां ६
कथाम् आत्मा कथयति यस्य श्रुती आसाते स तां शृणुयात्।

अपरञ्च फिलादिल्फियानगरीयसमाजस्य दूतं प्रतीत्थं लिखितं ७
प्रेषय; दायूदः कुञ्जिका स्वहस्तस्थितत्वाद् येन मोचिते नान्यैर्बद्धुं शक्यते
बद्धे चान्यै र्मोचयितुं न शक्यते तादृशः पवित्रः सत्यमयश्च प्रभुस्तुभ्यं
कथामेतां कथयति। त्वदीयां क्रियाम् अहं जानामि त्वं स्वयं दुर्ब्बलोपि ८
मदीयाज्ञां पालयित्वा मम नामास्वीकारं नाकार्षीः, तस्मात् पश्य यद्
द्वारं बद्धुम् अन्यस्यासाध्यं त्वत्कृते तादृशं द्वारमेकम् अहं मोचितवान्।
अपरं ये यिहूदिनो न सन्तोपि मृषावाक्येन स्वान् यिहूदिनइति वदन्ति ९
पश्य तादृशान् शैतानः सभास्थान् जनान् आनीय त्वदीयचरणौ प्रणाम-
यिष्यामि तेन यदहं त्वयि प्रीतोऽभवं तत् ते ज्ञातुं शक्ष्यन्ति। त्वं मम १०
धैर्य्यावलम्बनकथां पालितवान् इतिकारणात् पृथिवीस्थलोकानां परी-
क्षार्थं यः परीक्षाकालः सर्व्वजगज्जनानां समीप उपस्थास्यति तस्मात् त्वां
रक्षिष्यामि। पश्य मया झटिति समागम्यते त्वदीयं किरीटं यथान्येन ११
केनचित् न ह्रियते तदर्थं तव यदस्ति सञ्चितं तद् यत्नतो रक्ष। यो जनो १२
जयति स यथा पुनः कदापि वहि र्न गच्छति तन्निमित्तं तम् ईश्वरीय-

मन्दिरस्य स्तम्भीकरिष्यामि, एवं मदीयेश्वरस्य नाम, एवम् स्वर्गाद्
१२ आयातं यन् नूतनं यिरूशालमम् अर्थाद् ईश्वरस्य नगरं तदीयं नाम,
स्वीयम् एकं नूतनं नाम च तदुपरि लिखिष्यामि। समाजगणं प्रति यां
कथाम् आत्मा कथयति यस्य श्रुती आसाते स तां शृणुयात्।
१४ अपरं लायदिकेयानगरीयसमाजस्य दूतं प्रतीत्थं लिखितं प्रेषय;
यो यथार्थवादी विश्वास्यः सत्यसाक्षिस्वरूपईश्वरसृष्टवस्तूनामादिकर्त्ता
१५ स तुभ्यम् एतां कथां कथयति। अहं त्वदीयां क्रियां जानामि त्वं शीतलो
न भवसि नोष्णश्च भवसि किन्तु यत् त्वं शीतल उष्णो वा भवसीति
१६ मदीया वाञ्छा। अतएव शीतल उष्णश्च न भूत्वा कदुष्णत्वाद् अहं त्वां
१७ स्वमुखाद् उद्गरिष्यामि। त्वं कथयसि, अहं धनवान् वर्द्धिष्णुश्चाभवं मम
कस्याप्यभावो नास्ति, किन्तु यत् त्वं स्वयं दीनो दरिद्रोऽन्धो नग्नश्चेति
१८ न जानासि। त्वं धनी भवितुं मम समीपाद् अग्निना परिष्कृतं सुवर्णम्
एवं नग्नताजातलज्जानिवारणार्थं परिधानार्थं शुभ्रवसनञ्च तथा येन
त्वदीया दृष्टि र्निर्म्मला भवति चक्षुषो र्लेपं तादृशम् अञ्जनं क्रेतुम् अहं
१९ त्वाम् आदिशामि। यावन्तो लोका मम प्रेमभाजनानि भवन्ति तान्
सर्व्वान् अहं भर्त्सये शास्मि च तस्मात् त्वम् उद्योगी सन् मनः परावर्त्तय।
२० पश्याहं द्वारि तिष्ठन् द्वारम् आहन्मि तेन यः कश्चिन् मम रावं
निशम्य द्वारं मोचयिष्यति, अहं प्रविश्य तेन सार्द्धं भोक्ष्ये सोपि मया
२१ सार्द्धं भोक्ष्यते। अपरम् अहं यथा जित्वा पित्रा सहित एकसिंहासन
उपविष्टवान् तथा यो जनो जयति तमहं स्वीयसिंहासने स्वेन सार्द्धं
२२ उपवेशयिष्यामि। समाजगणं प्रति यां कथाम् आत्मा कथयति यस्य श्रुती
आसाते स तां शृणुयात्।

---

४ चतुर्थोऽध्यायः।

१ स्वर्गे ईश्वरस्य सिंहासनस्य प्राचीनलोकानां चक्षुभिः परिपूर्णचतुःप्राणिनाञ्च दर्शनम्।

१ इत्थं सति पश्यन् पश्यन् स्वर्गे मुक्तद्वारमेकं अपश्यम् एवं तस्मात्

तूरीशब्दवत् प्रथमशब्दो निर्गम्य मां प्रति कथामिमां प्राकाशयत् अत्र
आयाहि त्वां प्रति भाविघटना अहं प्रकाशयिष्यामि। तेन तत्क्षणाद् २
अहम् आत्मना समाविष्टोऽभवम्; अपरं स्वर्गमध्ये स्थापितं सिंहासनमेकं ३
तत्रोपविष्टं सूर्य्यकान्तमणिमिव प्रवालमिव च जनमेकम् अपश्यम्; तस्य ४
सिंहासनस्य चतुःपार्श्वेषु चुनीवद् एकं मेघधनुरास्ते। अपरं सिंहासनस्य
चतुःषु पार्श्वेषु चतुर्व्विंशतिसिंहासनोपविष्टाः शुक्लवसनपरिधायिनः सुवर्ण-
किरीटधारिणश्च चतुर्व्विंशतिः प्राचीनलोका आसते। एवं तस्मात् सिंहा- ५
सनाद् सौदामिनी जीमूतगर्जनं शब्दश्च निर्गच्छन्ति, अपरं सिंहासनस्य
सम्मुखे प्रज्वलिता सप्तवह्निदीपा अर्थाद् ईश्वरस्य सप्तात्मानः, स्फटिक- ६
वत् स्वच्छं समुद्रवत् पात्रमेकञ्च विद्यन्त; अपरं सिंहासनस्य मध्ये चतु-
र्दिक्षु चायतः पश्चाच्च सर्व्वाङ्गेषु चक्षुष्मन्तश्चत्वारः प्राणिनः सन्ति। प्रथमः ७
प्राणी सिंहसदृशो द्वितीयः प्राणी गोवत्ससदृशस्तृतीयः प्राणी मनुष्यवन्मुख-
धारी चतुर्थः प्राणी उड्डीयमानविहङ्गमोपमः। एकैकप्राणिनः षट् षट् पक्षाः, ८
अपरं ते वहिरन्तश्च लोचनैः परिपूर्णाः, एवं मध्ये दिवानिशं अविरताः
पवित्रः पवित्रःपवित्रः सर्व्वशक्ति वर्त्तमानो भूतो भविष्यंश्च प्रभुः परमेश्वरः
एतां कथां कथितवन्तः। एवं प्राणिगणो यदा तत्र सिंहासने समुपविष्टा- ९
नन्तकालजीविनस्तद्वद् गौरवं सम्मानं धन्यवादञ्च कृतवन्तः, तदा १०
चतुर्दिक्षु स्थिताः सिंहासनोपविष्टाश्चतुर्व्विंशतिः प्राचीनलोका अनन्त-
कालजीविनो जनस्य सम्मुखे न्यङ्मुखाः शिरोमुकुटान्यर्पयित्वा तं प्रणम्य
कथामेतां कथयितुम् आरब्धवन्तः। हे प्रभो त्वमेव महिमानं गौरवं ११
पराक्रमञ्च ग्रहीतुं योग्योऽसि यतो यत् किञ्चिद् वस्तु विद्यते तत् सर्व्वं
त्वमसृजः, एवं त्वदीयेच्छातः सर्व्वस्य सृष्टिर्बभूव स्थितिश्च भवति।

---

५ पञ्चमोऽध्यायः।

१ सप्तमुद्राभिर्मुद्राङ्कितस्य पुस्तकस्य दर्शनं खीष्टेन तस्य मुक्तीकरणं दिव्यदूत-
प्राचीनलोकैश्चतुर्भिः प्राणिभिश्च तस्य प्रशंसनञ्च।

अनन्तरं तस्य सिंहासनोपविष्टजनस्य दक्षिणहस्तेऽन्तर्लिखितं वहिः १

२ सप्तमुद्राभिरङ्कितं पत्रमेकं अदर्शम्। तत्पश्चात् तत्पत्रं तस्य मुद्राश्च
मोचयितुम् को योग्योऽस्ति? कथामेतां महाशब्देन घोषयन्तं प्रबलं दूतमेकम्
३ अहं दृष्टवान्। किन्तु स्वर्गमर्त्यपातालेति त्रिलोकीमध्ये तत् पत्रं मोचयितुं
४ तत्प्रति वीक्षितुञ्च कस्यापि सामर्थ्यं नाभवत्। पत्रिकां मोचयितुं तां प्रति
५ द्रष्टुञ्च कस्यापि सामर्थ्याभावाद् अहं बहु रोदितवान्। तेन तेषां प्राची-
नानाम् एको जनो माम् अवादीत्, मा रोदीः पश्य यो यिहूदावंशस्य
सिंहो दायूदो मूलं स पत्रिकां तत्सप्तमुद्राश्च मोचयितुं समर्थो भवति।
६ अनन्तरम् अहं पश्यन् पश्यन् तस्य सिंहासनस्य चतुर्णां प्राणिनां प्राची-
नानाञ्च मध्ये सर्व्वपृथिवीं प्रति प्रेषितेश्वरसप्तात्मस्वरूपसप्तचक्षुर्विशिष्टं
सप्तशृङ्गविशिष्टं बलित्वेन हतं मेषशावकसदृशञ्च दण्डायमानं जनमेकं
७ वीक्षितवान्। ततः स एत्य सिंहासनोपविष्टस्य दक्षिणहस्तात् तां पत्रिकां
८ अग्रहीत्। तदा पत्रिकाग्रहणाच् चत्वारः प्राणिनश्चतुर्व्विंशतिः प्राचीन-
लोकाश्च प्रत्येकं वीणां पवित्रलोकानां प्रार्थनासुगन्धिद्रव्यपरिपूर्णं स्वर्ण-
९ मयपात्रं गृहीत्वा मेषशावकस्य साक्षाद् अधोमुखाः अपतन्। अपरं ते
नूतनम् इदं गीतं अगायन्

'ग्रहीतुं पत्रिकां तस्या मुद्रां मोचयितुन्तथा।
योग्योऽसि त्वं बलिर्भूत्वा स्वकीयशोणितेन यतः।
सर्व्वस्माद् वंशतो देशाद् भाषातो राज्यतस्तथा।
परमेश्वरमुद्दिश्य त्वमेवास्मानमोचयः।
१० अस्मदीश्वरपक्षेऽस्मान् नृपतीन् याजकानपि।
अकार्षीस्तेन राजत्वं करिष्यामो वयं क्षितौ।'

११ तदनन्तरम् अहं पश्यन् पश्यन् तस्य सिंहासनस्य प्राणिनां प्राचीनानाञ्च
चतुर्दिक्षु बहूनां दिव्यदूतानां शब्दान् अश्रौषम् तेषान्तु संख्या सहस्र-
१२ गुणितसहस्राणि, अयुतगुणितायुतानि चासन्। तैरुच्चैरकथि

'बलं धनं तथा ज्ञानं शक्तिं सम्मानमेव च।
गौरवं धन्यवादञ्च ग्रहीतु सर्व्वमेव च।
बलित्वेन हतो यः स योग्योऽस्ति मेषशावकः।

एवं स्वर्गमर्त्यपातालसागरतन्मध्यस्थितानां सर्व्वेषां प्राणिनां कथामेतां १३
श्रुतवान्

'सम्मानं धन्यवादश्चाधिपत्यं गौरवन्तथा।

सदा सिंहासनस्थस्य तिष्ठन्मेषसुतस्य च।'

अपरं ते चत्वारः प्राणिनः कथितवन्तस्तथास्तु, एवं चतुर्व्विंशतिः प्राचीन- १४
लोका न्युब्जीभूयानन्तकालजीविनं प्राणमन्।

---

६ षष्ठोऽध्यायः।

१ खीष्टेन प्रथममुद्रामोचनं ३ द्वितीयमुद्रामोचनं ५ तृतीयमुद्रामोचनं ७ चतुर्थ-
मुद्रामोचनं ९ पञ्चममुद्रामोचनं १२ षष्ठमुद्रामोचनञ्च।

अनन्तरं स मेषशावकः सप्तमुद्राणाम् एकां मुद्राम् अमोचयत् तदा- १
ऽहम् अदर्शम् एवम् आगत्य पश्य तेषां चतुर्णां प्राणिनां एकस्य प्राणिनो
मेघगर्जनवत् एतां कथां अश्रौषम्। ततः परं पश्यन् पश्यन् एकं शुक्लघोटकम् २
अदर्शम् एवं यो जनस्तदारूढो धनुर्धारी तस्मै किरीटमेकञ्च दत्तवान्
एवं जयी पुनः पुन र्जेतुं गतवान्।

अपरं द्वितीयमुद्रायां मोचितायां सत्याम् आगत्य पश्य द्वितीयप्राणिन ३
इमां कथां श्रुतवान्। तता रक्तवर्ण एकोऽश्वो निरगच्छत्; एवं तदुपविष्ट- ४
जनाय पृथिवीतः शान्तिं दूरीकर्त्तुं मनुष्यान् परस्परं घातयितुञ्च साम-
र्थ्यम् अदीयत, एवं तस्मै वृहन् खड्ग एकश्चादीयत।

अनन्तरं तृतीयमुद्रायां मोचितायां सत्यां आगत्य पश्य तृतीयप्राणिन ५
इमां कथाम् अश्रौषम् ततः परं पश्यन् पश्यन् कृष्णवर्णाश्वारूढं मापन-
दण्डधारिणम् एकं जनं दृष्टवान्। एवं मुद्रापादमूल्येन लभ्या एकद्रोण- ६
गोधूमाः यवास्तु त्रयो द्रोणाः किन्तु तैलद्राक्षारसानां हानिं मा कार्षीः,
तेषां चतुःप्राणिनां मध्याद् एतादृशम् एकं शब्दं श्रुतवान्।

तदनन्तरं चतुर्थमुद्रायां मोचितायां सत्यां आगत्य पश्य चतुर्थ- ७
प्राणिनः कथामेतां श्रुतवान्। पश्चात् पश्यन् पश्यन् मृत्युनामकम् एकं जनं ८
पाण्डुवर्णाश्वारूढं तत्पश्चाद्गामिनं परलोकञ्च दृष्टवान् एवं खड्गदुर्भिक्ष

महामारीवनजन्तुप्रभृतिभिः पृथिव्याश्चतुर्थांशीयलोकान् नाशयितुं ताभ्यां
सामर्थ्यम् अदीयत।
९ ततः परं पञ्चममुद्रायां मोचितायां सत्यां ये जना ईश्वरस्य वाक्यहेतोः
१० तत्र साक्ष्यदानाच्च हता अभवन् तेषाम् आत्मनो वेद्या अधोऽपश्यम्। तत
उच्चैरेतद् अकथयन् हे पवित्र सत्यमय प्रभो अस्माकं बधकारिणां पृथिवीस्थ-
लोकानां विचारं कर्त्तुम् एवं तेभ्यः प्रतिफलं दातुं कति विलम्बं करि-
११ ष्यसि? तदा तेषाम् एकैकाय शुभ्रवस्त्राणि दत्तानि, अपरं तान् प्रतीति
प्रोक्तम् अभूत् यूयमिव हता भविष्यन्ति ये युष्माकं सहदासा भ्रातरश्च
तेषां संख्या यावत्कालं सम्पूर्णा न भवति तावत् वान्तास्तिष्ठत।
१२ ततः परं षष्ठमुद्रायां मोचितायां सत्याम् अहं पश्यन् पश्यन् अपश्यम्
महाभूमिकम्पोऽजायत, एवं सूर्य्यः केशनिर्म्मितवस्त्रवत् कृष्णवर्णः, चन्द्रमाश्च
१३ रक्तवर्णोऽभवत्, ततः प्रबलेन वायुना चालिते सति उडुम्बरवृक्षाद् यद्वद्
अपक्वफलानि पतन्ति तद्वद् आकाशात् पृथिव्यां नक्षत्राणि पतितुम्
१४ आरभन्त। एवं चर्म्मपुस्तकम् इव सङ्कोचितं स्थानान्तरीकृतं गगणमण्डलं
अभवत्, अपरं पर्व्वता उपद्वीपाश्च सर्व्वे स्थानान्तरं चालिता अभवन् एव
१५ पृथिवीस्था राजानः प्रधानलोका धनिनः सेनापतयो बलवन्तः सर्व्वे
मानवाः सर्व्वे दासा मुक्ता जनाश्च पशुगुहासु पर्व्वतीयगह्वरे च स्थानलुक्का-
१६ यितान् कर्त्तुम् वक्तुञ्च आरभन्त, हे पर्व्वता हे उपपर्व्वता अस्माकम् उपरि
पतित्वा सिंहासनस्थजनस्य समक्षात् मेषशावकस्य कोपाच्चास्मान् संगोपयत;
१७ यतस्तदीयैतादृशस्य प्रचण्डकोपस्य दिने समुपस्थिते कः स्थातुं शक्ष्यति?

---

७ सप्तमोऽध्यायः।

१ ईश्वरस्य लोकानां मुद्राङ्कितत्वं यिहूदिनां संख्या ९ अन्यदेशिनां संख्यात्वं
१३ ख्रीष्टस्य रक्तेन तेषां त्राणं सुखञ्च।

१ अनन्तरं समुद्रस्य पृथिव्यास्तन्मध्यस्थवृक्षादेश्चोपरि यथा वायु र्न
वहति तदर्थं पृथिव्याश्चतुर्दिक्षु दण्डायमानान् चतुरो दिव्यदूतान् पृथिव्या-
२ श्चतुरो वायून् धारयतोऽहं दृष्टवान्। एवम् अमरेश्वरस्य मुद्राप्राप्तं प्राच्या

दिश उद्गच्छन्तम् अपरमेकं दिव्यदूतम् अपश्यं स पृथिव्याः समुद्रस्य च
हिंसनाज्ञां प्राप्तान् चतुरो दूतान् उच्चैरिदम् अवदत्। वयं स्वेषाम् ईश्वरस्य ३
दासानां भाले यावत्कालं मुद्राचिह्नं नारोपयामस्तावद् यूयं सागरस्य
पृथिव्यास्तन्मध्यस्थानां वृक्षाणाञ्च हिंसनं न कुरुत। ततः परं मुद्रा- ४
ङ्कितलोकानां संख्या अश्रौषं यिहूदावंशे द्वादशसहस्राणि रूबेन्वंशे ५
द्वादशसहस्राणि गाद्वंशे द्वादशसहस्राणि आशेर्वंशे द्वादशसहस्राणि ६
नप्तालिवंशे द्वादशसहस्राणि मनःशिवंशे द्वादशसहस्राणि शिमियोन्वंशे ७
द्वादशसहस्राणि लेविवंशे द्वादशसहस्राणि इषाखर्वंशे द्वादशसहस्राणि
सिबूलून्वंशे द्वादशसहस्राणि यूषफ्वंशे द्वादशसहस्राणि बिन्यामीनवंशे ८
द्वादशसहस्राणि एतेषाम् इस्रायेलः सर्व्वेषां वंशानां मध्ये चतुश्चत्वा-
रिंशत्सहस्राधिकलक्षलोका मुद्रया चिह्निता अभवन्।

अनन्तरं पश्यन् पश्यन् अपश्यं सर्व्वदेशीयाः सर्व्ववंशीयाः सर्व्वराज्यीयाः ९
सर्व्वभाषावादिनश्चागण्या लोकाः शुक्लवस्त्राणि परिधाय हस्तैस्ताल-
वृन्तानि गृहीत्वा सिंहासनस्य मेषशावकस्य च सम्मुखे दण्डायमानाः
सन्तः परित्राणार्थम् अस्माकम् ईश्वरस्य मेषशावकस्य च जयो भूयाद् १०
इत्युक्त्वा प्रोच्चै र्जयशब्दम् कर्त्तुम् आरभन्त। ततः सर्व्वे दिव्यदूतास्तस्य ११
सिंहासनस्य प्राचीनानां चतुः प्राणिनाञ्च चतुर्दिक्षु दण्डायमानाः सन्तः
सिंहासनस्य सम्मुखे न्युब्जीभूय ईश्वरं प्रणम्य व्याहरन् तथास्तु, अस्माकम् १२
ईश्वरस्य धन्यवादो महिमा ज्ञानं प्रशंसा सम्मानं पराक्रमः शक्तिश्च सर्व्वदा
भूयासुः।

ततः परं तेषां प्राचीनानाम् एको जनो माम् अप्राक्षीत् एते परिहि- १३
तपाण्डरपटा लोकाः के? कुतश्चागमन्? ततोऽहं प्रत्यवादिषं हे महेच्छ
त्वमेव तज्जानासि। तदा स माम् अवादीत्, एते महाक्लेशान् भुक्त्वा मेष- १४
शावकस्य शोणितेन स्वं स्वं वस्त्रं प्रक्षाल्य शुक्लीकृत्यागच्छन्। इतिकार- १५
णाद् ईश्वरस्य सिंहासनस्य सम्मुखे तिष्ठन्तो दिवानिशं तस्य मन्दिरे तं
सेवन्ते, एवं सिंहासनोपविष्टो जन एतेषां मध्ये वसति। अपरम् एतेषां १६

क्षुत्पिपासे पुनः कदापि न भविष्यतः, रवम् एतेषां गात्रेषु रौद्रं कोऽप्युत्ता-
१७ पश्च न लगिष्यतः; यस्मात् सिंहासनस्य मध्यस्थायी मेषशावकस्तान् चार-
यिष्यति पीयूषपानीयस्य प्रस्रवणानि नेष्यति च, ईश्वरस्तु तेषां सर्व्वाणि
नयनतोयानि मार्क्ष्यति।

---

८ अष्टमोऽध्यायः।

१ सप्तमुद्राणां मोचनं ६ प्रथमतूर्य्या ध्वनिः ८ द्वितीयतूर्य्या ध्वनिः १० तृतीयतूर्य्या ध्वनिः १२ चतुर्थतूर्य्या ध्वनिश्च।

१ तदनन्तरं सप्तममुद्रायां मोचितायां सत्यां सार्द्धदण्डकालं स्वर्गो निःशब्दो-
२ ऽभवत्। तत ईश्वरस्य सम्मुखे दण्डायमानान् सप्तदूतान् अदर्शम् एवं
३ तेभ्यः सप्तदूतेभ्यः सप्ततूर्य्योऽदीयन्त। ततःपरम् अन्य एको दूतः स्वर्ण-
धूपाधारं गृहीत्वा वेद्याः समीपम् आगत्य दण्डायमानोऽभवत्, एवं
सिंहासनस्य सम्मुखस्थायाः सुवर्णवेद्या उपरि यथा सर्व्वेषां पवित्रलोकानां
४ प्रार्थनाभिः सार्द्धम् उत्सृजति तदर्थं प्रचुरधूपास्तस्मै दत्ताः। तत ईश्वरस्य
सम्मुखे पवित्रलोकानां प्रार्थनाभिः सार्द्धं दूतस्य हस्ताद् धूपधूम उद-
५ तिष्ठत्। पश्चात् स दूतो धूपाधारम् आदाय वेद्या अग्निना पूर्णं कृत्वा
पृथिव्यां निक्षिप्तवान् तेन शब्दा मेघगर्ज्जनं विद्युद् भूमिकम्पश्चाभूवन्।

६ ततःपरं सप्ततूरीः प्राप्तास्ते सप्तदूतास्तूरी वादयितुम् उद्यता
७ अभूवन्। ततः प्रथमदूतेन तूर्य्यां वादितायां सत्यां शिलाः शोणितमिश्रि-
ताग्नयश्चोपस्थिताः, ते च पृथिव्यां निक्षिप्ताः; तेन वृक्षाणां तृतीयांशा
दग्धा अभूवन् सर्व्वाणि हरिद्वर्णतृणानि च दग्धान्यभूवन्।

८ अनन्तरं द्वितीयदूतेन तूर्य्यां वादितायां वह्निना प्रज्वलितः पर्व्वतः
९ सागरे निक्षिप्तोऽभवत्, तेन सागरस्य तृतीयांशो तोयं रक्तं जातं तन्मध्यस्था-
यिनस्तृतीयांशजन्तवो मृताः सर्व्वेषां पोतानाञ्च तृतीयांशो ऽनश्यत्।

१० अनन्तरं तृतीयदूतेन तूर्य्यां वादितायां गगणात् प्रज्वलितप्रदीपवत्
नागदमनकनामकं वृहन्नक्षत्रमेकं स्खलन् नदनदीनां तृतीयांशानां सर्व्वेषां
प्रस्रवणानाञ्चोपरि पतितं तेन तेषां तृतीयांशतोयानि नागदमनकवत्

तिक्तानि जातानि। तस्मात् तत्तोयं पीत्वा बहवो मानुषास्तित्कत्वात् ११
प्राणान् अत्यजन्।

अपरं चतुर्थदूतेन तूर्य्यां वादितायां सूर्य्यचन्द्रनक्षत्राणां तृतीयांशस्या- १२
घातोऽभवत् तस्माद् एकैकस्य तृतीयांशो ध्वान्तेन व्याप्तः, एवं दिवसस्य
तृतीयांशोऽन्धकारावृतोऽभवत् रजनी च तादृशी जाता। तदानीमहं १३
पश्यन् पश्यन् स्वर्गमध्येनोड्डीयमानस्य प्रोच्चैर्वदतः कस्यचिद् दूतस्येदं वाक्यं
अश्रौषम्, हे पृथिवीनिवासिनो हा हा हा यतोऽवशिष्टास्त्रयो दूतास्तूरीं
वादयितुम् उद्यता आसते।

---

९ नवमोऽध्यायः।

१ पञ्चमतूरीध्वनिः तेन तारकायाः पतनं, अतलस्पर्शकुण्डस्य मोचनं घोरतरपतङ्गानामुत्थानं १३ षष्ठतूर्य्याध्वनिः, तेन चतुर्दूतानां मुक्तिश्च।

ततःपरं पञ्चमदूतेन तूर्य्यां वादितायाम् अहं स्वर्गात् तारकामेकां पृथि- १
व्यां पतन्तीं दृष्टवान्। अनन्तरं अतलस्पर्शकुण्डस्य कुञ्जिकायां तस्मै दत्तायां
सत्यां स तद् अतलस्पर्शकुण्डम् अमोचयत्। तेन तस्मात् कुण्डात् महाग्नेः २
धूमइव धूम उदगच्छत् ततस्तेन धूमेन रविगगणे अन्धकारावृते अभ-
वतां। पश्चात् तस्माद् धूमात् पतङ्गाः पृथिवीम् अगमन् एवं पृथिवीस्थ- ३
वृश्चिकानां सामर्थ्यमिव सामर्थ्यं तेभ्योऽदीयत। अपरं पृथिवीस्थतृणानि ४
हरिद्वर्णशस्यानि वृक्षादींश्च न हिंसितुं किन्तु येषां भाले ईश्वरस्य मुद्राया-
श्चिह्नं नास्ति तानेव लोकान् हिंसितुं ते समाज्ञाप्यन्त। प्राणान् नाशयितुं ५
नहि किन्तु पञ्चमासान् यावत् तांल्लोकान् क्लेष्टुं पतङ्गेभ्यः सामर्थ्यम् अदी-
यत, एवं वृश्चिकदंशनात् यादृशी व्यथा जायते तेषां दंशनादपि तादृशी
व्यथा जाता। तदानीं मानुषा मृत्युम् अन्वेक्ष्यन्ति किन्तु केनापि प्रकारेण ६
न प्राप्स्यन्ति, ते मृत्युं वाञ्छिष्यन्ति किन्तु मृत्युस्तेभ्यः पलायिष्यते। तेषां ७
पतङ्गानाम् आकृति युद्धार्थसज्जाश्ववत्, एवं शिरःसु किरीटानि मनुष्य-
मुखवत् तेषां मुखानि; योषितां कचाइव तेषां कचाः, सिंहदन्ताइव तेषां ८
दन्ताः; लौहकवचवत् तेषां कवचानि, एवं रणे धावतां बहुश्वयुक्तानां ९
रथानां यादृशाः शब्दास्तेषां पक्षाणां तादृशाः शब्दाः। अपरं वृश्चिकानामिव १०

तेषां लाङ्गूलानि तन्मध्ये कण्टकानि सन्ति, एवं पञ्चमासान् मानुषान्
११ हिंसितुं तेषां सामर्थ्यं। तेषां पतङ्गानां राजा,अतलस्पर्शकुण्डस्य दूतः
तदीयं नाम इब्रीयभाषया अवाद्दोन् यूनानीभाषया आपल्लुयोन् अर्थाद्
१२ विनाशकइति। एष एकः सन्तापो गतवान् अपरं पश्य भविष्यत् सन्ताप-
द्वयम् उपस्थितं विद्यते।

१३ तदनन्तरं षष्ठदूतेन तूर्य्यां वादितायां, ईश्वरस्य सम्मुखस्थायाः सुवर्ण-
वेद्याश्चतुश्चूडातः षष्ठतूरीधारिणं दूतं प्रति कथिताम् एतां कथाम्
१४ अश्रौषं फरात्नामिकायां महानद्यां बद्धा ये चत्वारो दूताः सन्ति तान्
१५ मोचय। एकवत्सरम् एकमासम् एकदिनम् एकदण्डञ्च यावत् मानुषाणां
तृतीयांशं नाशयितुं ये चत्वारो दूताः सज्जितास्ते तदा मुक्ता अभूवन्।
१६ तेषाम् अश्वारूढसैन्यानां संख्या विंशतिकोटय आसन् एवं तत्संख्यायाः
१७ कथामहम् अश्रौषम्। इत्थं तान् वाजिनस्तदुपविष्टजनांश्चादर्शं तेषां
वर्म्माणि वह्निनीलप्रस्तरगन्धकस्वरूपाणि तथा सिंहमुण्डवत् वाजिनां
१८ मुण्डानि मुखेभ्यश्च वह्निधूमगन्धकानि निरगच्छन्। एभिस्त्रिभिरुत्पातैः
१९ अर्थाद् वदननिर्गतै र्वह्निधूमगन्धकै र्मानुषाणां तृतीयांशोऽनश्यत्। अपरं
वाजिनां वदनेषु पुच्छेषु च हिंसनशक्तिरासीत्, यतः सर्पलाङ्गूलवत् तेषां
२० लाङ्गूलानि किन्तु मुण्डवत्त्वात् तैरहिंसन्। एतैरुत्पातै र्यषामवशिष्ट-
लोकानां मृत्यु र्नाभवत् ते दर्शनश्रवणगमनादिक्रियासमर्थस्वर्णरूप्यपि-
त्तलप्रस्तरकाष्ठनिर्म्मितप्रतिमाभूतगणपूजा न त्यक्ता स्वहस्तकृतकर्म्मभ्यो
२१ मनो न परावर्त्तितवन्तः, एवं बधकुहकव्यभिचारचौर्य्यादिस्वक्रियातश्च
स्वमनो न परावर्त्तितवन्तः।

---

१० दशमोऽध्यायः।

१ पुस्तकहस्तशक्तिमद्दिव्यदूतस्य दर्शनं, ईश्वरस्य माज्ञा तस्य शपथः, भोजनार्थं योहन पुस्तकदानञ्च।

१ अपरम् अन्यमेकं महाबलवन्तं दिव्यदूतं स्वर्गादवरोहन्तम् अहमदर्शम्।
२ स मेघवर्णवस्त्रपरिधायी तस्य शिरसि ऐन्द्रधनुः सूर्य्यवद् वदनं वह्नि-

स्तम्भवत् चरणौ करे क्षुद्रमनावृतपुस्तकमेकं आस्ते। स दक्षिणचरणं साग- २
रोपरि वामचरणं पृथिव्युपरि निधाय दण्डायमानः सन् सिंहगर्जनवद्
उच्चशब्दमकार्षीत् शब्दे कृते सति मेघगर्जनवत् सप्त स्वना अभूवन्। एतेषु ४
सप्तगर्जनस्वनेषु सत्सु तच्चरित्रं लेखितुम् अहम् उद्यतः किन्तु मां प्रति
कथितम् एतद् आकाशीयं वाक्यम् अश्रौषम्, मेघगर्जनशब्देन यदिदं
चरित्रं प्रकाशितमभूत् तद् गोपय मा लिख। अनन्तरं सागरे चरणैकं ५
पृथिव्यां चरणैकं निधाय दण्डायमानं यं दूतम् अहम् अदर्शं। स स्वर्गे करैकं ६
स्थापयित्वा गगणमण्डलस्य तन्मध्यस्थवस्तुनश्च, एवं पृथिव्यास्तन्मध्यवस्तुनश्च
तथा समुद्रस्य तन्मध्यस्थवस्तुनश्च स्रष्टा योऽनन्तकालस्थायी तन्नामोच्चार्य्य
शपथमेतं कृतवान् इदानीं स समय उपस्थितो नहि; किन्त्वीश्वरेण स्वदास- ७
भविष्यद्वादिनः प्रति यादृशं प्रकाशितं तद्वत् सप्तमदूतस्य कथनसमये
अर्थाद् यदा स तूरीं वादयितुम् उद्यतो भविष्यति तदानीम् ईश्वरस्य
निगूढवाक्यं सफलं भविष्यति। अपरं प्राक् श्रुताकाशवाणीवत् मम ८
सन्निधौ पुनरेषाकाशवाणी जाता यः सागरोपरि चरणैकं पृथिव्युपरि च
चरणैकं निधाय दण्डायमान आस्ते तन्निकटं गत्वा तस्य हस्ताद् अनावृतं
क्षुद्रपुस्तकं गृहाण। तदाहं तस्य दूतस्य समीपं गत्वा कथितवान् एतत्क्षुद्र- ९
पुस्तकं मह्यं देहि; तदा सोऽवदत् गृहीत्वा भुंक्ष्व, एतद् उदरे तिक्तरसं
भविष्यति किन्तु मुखे मधुवत् सुस्वादु लगिष्यति। तदाहं दूतस्य करात् १०
तत्पुस्तकं गृहीत्वा भुक्तवान् ततो मुखेऽतीवमधुरसबोधो जातः किन्तु
जठरे प्रविष्टमात्रं तिक्तमभवत्। पश्चात् स मामवादीत् नानाराज्यीयानां ११
नानादेशीयानां नानाभाषावादिनाञ्च लोकानां नृपतिनिवहानाञ्च सम्मुखे
त्वया पुनर्भविष्यद्वाक्यं वक्तव्यम्।

---

११ एकादशोऽध्यायः।

१ मन्दिरमापनं, द्वयोः साक्षिणोः कथनं, हननं सार्द्धदिनत्रयाद् उत्थानं स्वर्गगमनञ्च
१५ सप्तमतूर्य्याध्वनिः १९ स्वर्गीयमन्दिरमोचनञ्च।

पश्चात् परिमाणदण्डवद् एको दण्डो मह्यम् अदायि ततः स दूतो १

दण्डायमानो मामवादीत्, उत्थाय ईश्वरमन्दिरस्य तन्मध्यस्थसेवकानां
२ वेद्याश्च परिमाणं कुरु। किन्तु मन्दिरस्य वहिर्देशं त्यज तस्य परिमाणं
मा कुरु यतस्तद् भिन्नदेशीयेभ्योऽदीयत, एवं ते द्विचत्वारिंशत् मासान्
३ यावत् पवित्रनगरं पदतलै र्दलयिष्यन्ति। पश्चाद् अहं स्वीयाभ्यां द्वाभ्यां
साक्षिभ्यां सामर्थ्यं दास्यामि ततस्तौ शाणवसने परिधाय षष्ठ्यधिकद्विश-
४ ताधिकसहस्रदिनानि यावत् भविष्यद्वाक्यानि वदिष्यतः। तौ जगदी-
५ श्वरस्य सम्मुखे दण्डायमानजितवृक्षद्वयस्वरूपौ प्रदीपद्वयस्वरूपौ च। यदि
केचित् तौ हिंसितुं चेष्टन्ते तर्हि तयोर्वदनाभ्याम् अग्नि र्निर्गत्य तान् शत्रून्
भस्मसात् करिष्यति यदि कश्चित् तौ हिंसितुं चेष्टते तर्हि तद्वत् तेन
६ विनष्टव्यम्। अपरं भविष्यद्वाक्यकथनदिने यथा वृष्टि र्न जायते तदर्थम्
आकाशं रोद्धुं तयोः सामर्थ्यं स्थास्यति, अपरं जलं शोणितं कर्त्तुम् इच्छानुरूपं
मुहुर्मुहुः पृथिवीस्थलोकान् सर्व्वोत्पातग्रस्तान् कर्त्तुं तयोः सामर्थ्यं स्थास्यति।
७ किन्तु तयोः साक्ष्ये समाप्ते, अतलस्पर्शकुण्डाद् यः पशुरुत्थास्यति स ताभ्यां
८ सह युद्धं कृत्वा जित्वा तौ हनिष्यति। तेन यस्मिन् नगरे प्रभुः क्रुशे हतो-
ऽभूत् पारमार्थिकत्वेन सिदोम्मिसरनामभ्यां विख्यातस्य तस्य महानग-
९ रस्य राजपथे तयोः कुणपे स्थास्यतः किन्तु तयोः शवयोः सार्द्धदिनत्रयं
यावत् पथिमध्ये दृष्टयोरपि केपि राज्यीया भाषावादिनो देशीयाश्च
१० लोकास्तौ श्मशाने स्थापयितुं नानुमंस्यन्ते। वरम् इमौ द्वौ भविष्यद्वादिनौ
पृथिवीस्थान् सर्व्वलोकान् यातितवन्तौ तत्कारणात् पृथिवीस्थिताः सर्व्वे
लोकास्तयो र्मृत्युत आनन्दिताः सन्तः परस्परम् आनन्दोपढौकनं प्रदा-
११ स्यन्ति। सार्द्धदिनत्रयात् परं तयोः शरीरयोरीश्वराज् जीवात्मनि प्रविष्टे
तौ चरणै र्दण्डायमानौ भविष्यतः, एवं ये तद् द्रक्ष्यन्ति तेऽतीवत्रासयुक्ता
१२ भविष्यन्ति। पश्चात् तौ स्वौ प्रतीति वैहायसीं वाचम् अश्रौषतां युवाम्
उपर्य्यागच्छतं, तदा तौ मेघम् आरुह्य स्वर्गं गतवन्तौ, एवं तयोः शत्रवस्तद्
१३ अदर्शन्। अपरं तदानीम् ईदृशो भूमिकम्पोऽभवत् येन नगरस्य दशमांशोऽपतत् तस्मात् सप्तसहस्राणि मानुषा हताः किन्त्ववशिष्टलोका

भीत्वा स्वर्गस्थेश्वरस्य धन्यवादम् अकुर्व्वन्। एष द्वितीयसन्तापो गतवान्१४
पश्य तृतीयः सन्तापः शीघ्रम् आगच्छति।

पश्चात् सप्तमदूतेन तूर्य्यां वादितायां जगतो राज्यान्यस्माकं१५
प्रभोस्तेनाभिषिक्तजनस्य चाभवन् अपरं स सर्व्वदा राजत्वं करिष्यति
एतन्महाशब्देन स्वर्गो व्याप्यत। अनन्तरम् ईश्वरस्य चतुर्दिक्षु स्थिताः सिंहा- १६
सनोपविष्टाश्चतुर्व्विंशतिप्राचीनलोका भुवि न्यञ्चमुखाः सन्त ईश्वरं प्रणम्य
कथयितुम् आरभन्त। हे सर्व्वशक्तिमन् प्रभो परमेश्वर त्वं वर्त्तमानभूत- १७
भविष्यत्त्रिकालस्वरूपः तव धन्यवादं कुर्म्महे यतस्त्वं निजमहापराक्रमं
प्रकाश्य राजत्वं करोषि। एवं यद्देशीयलोकास्तुभ्यम् अकुप्यन् तेषामुपरि १८
यदा तव क्रोध उपस्थास्यति यदा च मृतलोकान् विचारयिष्यसि तथा
तव भविष्यद्वादिभ्यः पवित्रलोकेभ्यस्तव नाम्नो भीतेभ्यः क्षुद्रमहालोकेभ्यश्च
पारितोषिकं दास्यसि, एवं पृथिव्या नाशिनो नाशयिष्यसि, तादृशः समय
उपातिष्ठत्।

ततःपरम् ईश्वरस्य स्वर्गीयमन्दिरस्य द्वारस्य मुक्तत्वात् तन्मध्यस्थे १९
प्रभो र्नियमाधारे सप्रकाशे सति सौदामिनी घनगर्ज्जनं स्वनो भूमिकम्पो
महती शिलावृष्टिश्च सर्व्वाण्येतानि भवितुम् आरभन्त।

---

## १२ द्वादशोऽध्यायः।

१ आश्चर्य्ययोषिदेकाया दर्शनं तस्याः प्रसवः, पुत्त्रेण सार्द्धं नागाद् विपिनं प्रति पलायनं ७ मिकायेल्नागयो र्युद्धं नागस्य पराभवः तद्योषितस्ताडनञ्च।

ततः परं स्वर्गमध्ये महाश्चर्य्यदर्शनं जातं रविभूषणा पदतले शुधां- १
शुधारिणी शिरसि द्वादशतारकायुक्तकिरीटधारिणी गर्भवती च
काचिद् योषित् प्रसववेदनया व्यथिता आर्त्तरावं कर्त्तुम् आरभत। २
अपरमेकम् आश्चर्य्यदर्शनं जातं सप्तसु शिरःसु सप्तकिरीटानि दशशृङ्गा- ३
वशिष्ट एको रक्तवर्णो नागो लाङ्गूलेन नभसीयतारकाणां तृतीयांशम्
आकृष्य धरण्यां न्यक्षिपत्। अपरं स नागः प्रसववेदनार्त्ताया योषितः ४

५ प्रसवसमये तस्या अपत्यं ग्रसितुं तस्याः सम्मुखे दण्डायमानोऽभवत्। पश्चाल्-
लौहदण्डेन सर्व्वराज्यानि शासितुं यः शक्नोति तादृशं पुत्त्रमेकं सा योषित्
प्रासोष्ट, तत्क्षणात् स पुत्त्र ईश्वरस्य तदीयसिंहासनस्य च सम्मुखम् आनायि।
६ एवं षष्ट्यधिकशतद्वयाधिकसहस्रदिनानि यावत् तस्य पालनार्थम् ईश्वरो
विपिनमध्ये यत् स्थानं न्यरूपयत् तत्स्थानं प्रति सा योषित् पलायिष्ट।
७ तदनन्तरं संग्रामे उपास्थिते मीखायेल् तस्य दूताश्च तेन
नागेन सार्द्धम् अयुध्यन् ततः स नागः तस्य दूताश्च युद्धा जेतुं नाशक्नुवन्
८ तेन स्वर्गमध्ये स्थानमपरं न प्राप्तं। किन्तु स सर्व्वजगद्भ्रमयित्रपवादिक-
नाम्ना विख्यातः पुरातनः सर्प्पः, अर्थात् वृहन् नागो यः शैतान् स निज-
९ दूतैः सहितः पृथिव्यां न्यक्षिप्यत। तदाहं स्वर्गे ईदृशं महाशब्दम् अश्रौषं,
इदानीम् अस्माकम् ईश्वरात् परित्राणं पराक्रमो राज्यम् एवं ख्रीष्टस्य
१० सामर्थ्यम् उपातिष्ठत्, यतो दिवारात्रौ चास्माकम् ईश्वरस्य साक्षाद् अप-
११ वदिष्ट यो भ्रातृणाम् अपवादकः सोऽधःपतितोऽभवत्। किन्तु ते मृत्युं
यावत् स्वीयस्वीयप्राणान् प्रियान् अज्ञात्वा मेषशावकस्य शोणितेन स्वीय-
१२ स्वीयसाक्ष्यवाक्येन च तं जितवन्तः। अतएव स्वर्गः स्वर्गनिवासिनश्च लोका
आनन्दिता भवन्तु किन्तु पृथिवीसागरनिवासिनां सन्तापो भविष्यति
यतः शैतान् निजकालं संक्षिप्तं विज्ञाय महाक्रोधाविष्टः सन् युष्माकं
१३ समीपम् अवरोहति। अनन्तरं स नागः पृथिव्यां स्वं निक्षिप्तं विलोक्य तस्याः
१४ प्रसूतपुत्त्राया योषितो विपक्षतां कर्त्तुम् आरभत। किन्तु तस्य नागस्य
मुखाद् यथा एककालं द्विकालम् अर्द्धकालञ्च यावत् रक्षिता भवति
तदर्थम् विपिनं प्रत्युड्डीय यातुं तस्यै महाकुम्भस्य पक्षाविव द्वौ पक्षौ दत्तौ।
१५ पश्चात् स नागस्तां योषितम् आप्लावयितुं निजवदनाद् नदीवत् प्रवाहिपय
१६ उद्गीर्य्य तस्याः पश्चात् निरक्षिपत्। किन्तु पृथिवी स्वयं विदीर्णा सती
१७ नागवदनात् निर्गतां नदीं पीत्वा योषितम् उपाकरोत्। इत्थं सति नागः
स्त्रियं प्रति पुनः क्रुद्धा ईश्वरस्याज्ञापालिभि र्यीशुख्रीष्टस्य साक्षिभिः
तदवशिष्टवंशीयलोकैश्च सार्द्धं योद्धुम् आरभत।

## १३ त्रयोदशोऽध्यायः।

१ सप्तशीर्षदशशृङ्गदशकिरीटविशिष्टपशोः सागरादुत्थानं तस्मै नागपराक्रमदानं ११ धरणीतो द्वितीयपशोरुत्थानं पूर्व्वीयपशोः प्रतिमानिर्म्माणं सर्व्वेषां कैश्चतपूजनञ्च।

ततःपरम् अहं सागरीयसिकतोपरि दण्डायमानं सागराद् उत्तिष्ठन्तं १
पशुमेकम् अदर्शं तस्य सप्तशिरांसि दशशृङ्गाणि दशसु शृङ्गेषु दश-
किरीटानि,एवं शिरस्सु ईश्वरनिन्दकनाम लिखितम् आस्ते। अपरं यं पशु- २
मऽहं दृष्टवान् स चित्रव्याघ्रसदृशः किन्तु भल्लुकसदृशौ तदीयपादौ सिंहस्य
मुखमिव तदीयमुखं; तदा स नागः स्वीयपराक्रमं सिंहासनं राजत्वञ्च सर्व्वं
तस्मिन् समर्पितवान्। तस्य पशोः सप्तशिरसाम् एकशिरः प्रहरणाद् छत- ३
प्रायम् अदर्शं किन्तु तस्य तत् सांघातिकक्षतं शुष्कतां गतं पश्चाज् जगतः
सर्व्वे लोकास्तमधि चमत्कृतवन्तः। अपरं नागेन तस्मिन् पराक्रमस्य सम- ४
र्पितत्वात् सर्व्वे तं नागं प्राणमन् तस्य पशोः समः कोऽस्ति? तेन च कः संग्राम-
यितुं शक्नोति? इति ब्रुवाणास्ते तस्मै पशवे नमः कृतवन्तः। अनन्तरं गर्व्व- ५
वाक्यानि निन्दावाक्यानि च वक्तुं तस्मै वदनम् अदीयत द्विचत्वारिंशत्
मासान् यावद् अवस्थातुं तस्मै सामर्थ्यम् अदायि। तत ईश्वरं तन्नाम ६
तद्भूव्यं स्वर्गनिवासिना जनांश्च जुगुप्सितुं स स्वीयवदनं विस्तीर्णवान्। एवं ७
पवित्रलोकैः सार्द्धं युद्धा तान् जेतुं तथा सर्व्ववंशीयानां सर्व्वभाषावादिनां
सर्व्वदेशीयानाञ्च लोकानाम् अधिपतित्वं कर्त्तुं तस्मै सामर्थ्यम् अदायि।
तस्माद् बलिस्वरूपमेषशावकस्य जीवनरूपपुस्तके येषां नामानि जगत्सृष्टे- ८
रारम्भतो लिखितानि न सन्ति ते सर्व्वे पृथिवीस्था लोकास्तं प्रणंस्यन्ति।
यस्य कर्णाः सन्ति स शृणोतु। यो जनोऽन्यं वन्दीकृत्य नयति स स्वयं वन्दी- ९
भूयानीतो भविष्यति, एवं यः कश्चित् खड्गेन नाशयति स स्वयं खड्गेन १०
नष्टो भविष्यति। अत्र पवित्रलोकानां धैर्य्यं विश्वासस्य विद्यते।

तदनन्तरं मेषशावकमिव शृङ्गद्वयविशिष्टम् अपरमेकं पशुं पृथिवीत ११
उत्तिष्ठन्तम् अहमपश्यम्। स नागइव कथामकथयत् प्रथमपशोः समक्षं १२
तस्य सर्व्वमधिपतित्वं कर्त्तुम् आरभत; अपरं यस्य प्रथमपशोः शिरोजातं
सांघातिकं क्षतं शुष्कतां गतं तं पृथिवीं पृथिवीस्थसर्व्वलोकांश्च स प्राणमयत्।

१३ अपरञ्च मनुष्याणां साक्षात् स्वर्गाद् भुवि वह्निवृष्टि र्भवति, एतादृशीम्
आश्चर्य्यक्रियां दर्शयित्वा पशोः साक्षाद् आश्चर्य्यां क्रियां कर्त्तुं तस्मै यत्
सामर्थ्यम् अदीयत तद्द्वारा पृथिवीनिवासिनां लोकानां भ्रमम् अजनयत्।
१४ एवं यः पशुः खड्गाघातेन क्षतशिरस्कः सन् जीवितो वर्त्तते तस्य प्रतिमां
१५ निर्म्मातुं पृथिवीनिवासिनो लोकान् आदिशत्। अपरञ्च तस्य पशोः प्रतिमा
यथा कथां कथयितुं शक्नोति, एवं यः कश्चित् तस्य पशोः प्रतिमायै प्रणामं
न करिष्यति तं हनिष्यति तदर्थं पशोः प्रतिमायाः प्राणान् प्रतिष्ठातुं तस्मै
१६ सामर्थ्यम् अदीयत। अन्यच्च क्षुद्रा वा महान् वा धनी वा दरिद्रा वा
बद्धो वा मुक्तो वा सर्व्वानेतान् दक्षिणहस्ते भाले वा तदीयं चिह्नं धारि-
१७ तवान्। एवं तस्य पशो र्नाम वा नामसंख्यां यः कश्चिन्न धारयिष्यति तं
१८ किमपि द्रव्यं क्रेतुं विक्रेतुञ्च निषिद्धवान्। अनेन ज्ञानं प्राप्यते तस्मात्
यो जनो ज्ञानवान् स तस्य पशोः संख्यां गणयतु सा तु मनुष्याणां गणनया
षट्षष्ट्यधिकषट्शतसंख्या भवति।

---

१४ चतुर्दशोऽध्यायः।

१ सीयोनि पर्व्वते स्रीयलोकैः सार्द्धं ख्रीष्टस्य वीक्षणं ६ सुसंवादप्रचारिणोबाबिल्-विनाशप्रकाशिनो दूतस्य दर्शनं १४ ईश्वरस्य कोपशस्यस्य कर्त्तनं कोपद्राक्षायन्त्रनिष्पीडनञ्च।

१ ततः परं पश्यन् पश्यन् सीयोनपर्व्वतस्योपरि दण्डायमानम् एकं मेषशावकं,
अपरं तस्य पितु र्नाम येषां भाले लिखितं तान् चतुश्चत्वारिंशत्सहस्राधिक-
२ लक्षलोकांश्च दृष्टवान्। अन्यच्च स्वर्गाद् अनेकोदककल्लोलवद् घोरघन-
३ गर्जनवच्च ध्वनिम् अश्रौषं वीणावादकानां वीणारणञ्च श्रुतवान्। अपरं ते
सिंहासनस्य सम्मुखस्थानां चतुःप्राणिनां प्राचीनानाञ्च साक्षाद् एकं नवीनं
गीतं अगायन् किन्तु धरण्या उद्धृतान् चतुश्चत्वारिंशत्सहस्राधिकलक्ष-
४ लोकान् ऋते कोऽपीतरस्तद् गीतं शिक्षितुं नाशक्नोत्। ते शुचय आसन्
एवं वेश्यासंसर्गेणापवित्रीकृताः कदापि नाभवन्; अपरं यत्र कुत्रापि मेष-
शावकोऽगच्छत् तत्र ते तस्य पश्चाद्गामिनोऽभवन् एवं मानुषाणां मध्यात्

मुक्ताः सन्त ईश्वरं मेषशावकञ्चोद्दिश्य प्रथमजातफलस्वरूपा भवन्ति।
अपरञ्च तेषां वदनेभ्यः कदापि मृषावाक्यं न निरगमत् त ईश्वरस्य सिंहा- ५
सनस्य सम्मुखे निर्दोषा भवन्ति।

तदनन्तरं नभोमध्ये उड्डीयमानं दूतमेकम् अपश्यं, स मेदिनीनिवासिनां ६
सर्व्वदेशीयानां सर्व्ववंशीयानां सर्व्वभाषाभाषिणां सर्व्वराज्यीयानाञ्च
लोकानां समक्षं प्रचारयितुं सर्व्वदास्थायिनं सुसंवादं प्राप्ताँश्चकैः कथामेतां
कथितवान् ईश्वरस्य विचारसमय उपतिष्ठति, अतएव तस्माद् भीत्वा ७
तदीयं महिमानं प्रकाशयत तथा यो नभोमण्डलमहीमण्डलसरित्पति-
प्रस्रवणादीनि सर्व्वाणि सृष्टवान् तस्मै प्रणामं कुरुत। ततः परम् अन्य- ८
एको दूतस्तस्य पश्चाद्गामी सन् एतां कथामकथयत् बाबिल्नामिका
महानगरी पतति सा पतति यतः सा कोपव्यभिचारसुरां सर्व्वदेशीय-
लोकान् अपाययत्। एवं तस्य पश्चात् तृतीयो दूत आगत्य प्रोच्चैः कथा- ९
मेतां कथितवान् यदि कश्चित् तं पशुं वा तस्य प्रतिमां प्रणमति, यदि
वा तस्य चिह्नं भाले हस्ते वा धारयति तर्हीश्वरस्य कोपमात्रा या १०
मदिरा दण्डपात्रेऽवातार्य्यत तां मदिरां स जनः पास्यति; अपरं पवित्र-
दूतानां मेषशावकस्य च साक्षाद् गन्धकाग्नौ यातनां प्राप्स्यति। अन्यच्च ये ११
तं पशुं तस्य प्रतिमां वा नमन्ति तस्य नामचिह्नञ्च धारयन्ति सर्व्वदा तेषां
यातनाधूम उत्थास्यति ते दिवानिशं मध्ये विश्रामं न प्राप्स्यन्ति च।
एतस्मिन् ईश्वरस्य निदेशस्य ख्रीष्टस्य धर्म्मस्य च पालयितॄणां पवित्रलोकानां १२
धैर्य्यं प्रकाशितम् आस्ते। अपरं मां प्रति कथिताम् एतां वैहायसीं वाणीम् १३
अश्रौषम् ये प्रभौराश्रये म्रियन्ते ते तत्क्षणाद् धन्या इति लिख,
एवं ते स्वश्रमेभ्यो विश्रामं प्राप्नुवन्ति तेषां कर्म्माणि च तैषां पश्चाद्गामीनि
भवन्ति, इत्यध्यात्मा कथयति।

तदनन्तरं पश्यन् पश्यन् श्वेतवर्णमेघं तदुपविष्टञ्च सुवर्णमुकुटिनं हस्ते १४
तीक्ष्णकर्त्तनीधारिणं मानवपुत्रमिवैकं जनं दृष्टवान्। ततःपरं मन्दि- १५
राद् अपरएको दूतो निर्गत्य तं मेघारूढम् उच्चैरवदत् मेदिन्याः

शस्यानां परिपक्कत्वात् शस्यकर्त्तनस्य समय उपतिष्ठति तस्मात् कर्त्तन्या
१६ शस्यानि छिन्धि। ततो जीमूतारूढजनेन स्वकर्त्तन्या मेदिन्यां शस्तेषु
१७ क्षत्तेषु धरण्याः सर्व्वाणि शस्यानि छिन्नान्यभवन्। ततःपरं स्वर्गस्थमन्दि-
१८ राद् अन्य एकस्तोक्ष्णकर्त्तनीधारी दूतो निरगच्छत्। अपरो वह्नेरधि-
पतिरेको दूतो यज्ञवेद्या निर्गच्छन् तं तीक्ष्णकर्त्तनीधारिणं जनम्
उच्चैरेतां कथां व्याहरत् पृथिवीस्थद्राक्षाफलानि सर्व्वाणि पक्कानि सन्ति
१९ तस्मात् स्वीयकर्त्तन्या धरण्या द्राक्षाफलानां स्तवकानि छिन्धि। तेन
सदूतः पृथिव्यां कर्त्तन्या तस्या द्राक्षाफलानि छत्त्वेश्वरस्य क्रोधपेषणी-
२० यन्त्रे तानि निरक्षिपत्। अनन्तरं नगरस्य वहिस् तस्मिन् पेषणीयन्त्रे तेषु
पिष्टेषु सत्सु तन्मध्यात् शोणितं निर्गत्य शतक्रोशान् यावद् ऊर्द्धम् अश्व-
वल्गापर्य्यन्तं व्याप्नोत्।

---

१५ पञ्चदशोऽध्यायः।

१ सप्तोत्पातकारिणां सप्तदूतानां दर्शनं, पशुजयिनां गीतं ५ ईश्वरकोपपूर्ण-पात्राणां चालनञ्च।

१ ततःपरम् अहं स्वर्गेऽपरमेकं महद् आश्चर्य्यं चिह्नं दृष्टवान् वस्तुतस्तु
येन उत्पातेनेश्वरस्य कोपः सफलो भवति तादृशोत्पातकारिणः सप्त दूतान्
२ अदर्शम्। एवं वह्निमिश्रितम् एकं काचमयं समुद्रवत्पात्रम् अपश्यम् अन्यच
ये पशोः प्रतिमया चिह्नेन नाम्नां संख्यया च सार्कं पशुं अजयन् ते
ईश्वरस्य वीणाधारिणो भूत्वा तस्य काचमयस्य समुद्रवत्पात्रस्य समीपे
३ दण्डायमाना ईश्वरस्य दाससुसा मेषशावकस्य च गीतेन स्तुतिमिमां
कर्त्तुम् आरभन्त, यथा

'सर्व्वशक्तिविशिष्टस्त्वं हे प्रभो परमेश्वर।
त्वदीयं सकलं कर्म्म महदाश्चर्य्यमेव च।
पवित्रप्राणिनां राजन् मार्गा न्याय्या ऋतास्च ते।
४ अतएव प्रभो त्वत्तो को न भीतिं करिष्यति।
को वा त्वदीयनाम्नश्च गौरवं न करिष्यति।

त्वं केवलं पवित्रोऽसि त्वद्दण्डाश्च प्रकाशिताः।
तस्मात् सर्व्वजना एत्य प्रणंस्यन्ति तवाग्रतः।'

तदनन्तरम् अहं पश्यन् पश्यन् स्वर्गे साक्ष्यदूष्यवत् मन्दिरस्य द्वारं ५
मुक्तं दृष्टवान्। ततः शुद्धशुक्लवर्णवस्त्रपरिधायिनो वक्षःसु बद्धसुवर्णवर्म्माणः ६
एतादृशाः सप्तोत्पातकारिणः सप्तदूता मन्दिराद् निरगच्छन्। तदा चतुः- ७
प्राणिनाम् एकः प्राणी अनन्तकालस्थायिन ईश्वरस्य क्रोधेन परिपूर्णानि
सप्तसुवर्णपात्राणि तेभ्यः सप्तदूतेभ्यः प्राददात्। तेनेश्वरस्य तेजःपराक्रमाभ्यां ८
जातो यो धूमस्तेन मन्दिरं परिपूर्णम् अभवत्, एवं यावत् तेषां सप्तानां
दूतानाम् उत्पाता न समाप्तास्तावत् कोऽपि मन्दिरं प्रवेष्टुं नाशक्नोत्।

---

## १६ षोडशोऽध्यायः।

१ पात्रावतारणं २ प्रथमपात्रावतारणं ३ द्वितीयपात्रावतारणं ४ तृतीयपात्रावतारणं ८ चतुर्थपात्रावतारणं १० पञ्चमपात्रावतारणं १२ षष्ठपात्रावतारणं १७ सप्तमपात्रावतारणञ्च।

ततःपरं मन्दिरात् तान् सप्तदूतान् प्रति कथितम् एतं महास्वनम् अहम- १
श्रौषं, यूयं गत्वेश्वरक्रोधस्य तानि सप्तपात्राणि मह्याम् अवतारयत।
ततः प्रथमो दूतः पृथिव्यां स्वीयपात्रम् अवातारयत् ततः पशोर्नामा- २
ङ्कितशरीरेषु तस्य प्रतिमापूजकेषु मानुषाणां शरीरेषु च तस्मिन् लग्ने तेषां
गलद्वेदनाविशिष्टं क्षतम् अभवत्।
ततःपरं द्वितीयो दूतः स्वपात्रं जलधिमध्येऽवातारयत् ततो जलधे र्जलं ३
मृतलोकानां शोणितसदृशत्वात् तन्मध्यस्था जीवजन्तवः सर्व्वे प्राणानत्यजन्।
अपरं तृतीयो दूतः सकलेषु सरित्सु प्रस्रवणेषु च निजपात्रम् अवाता- ४
रयत् तेन सर्व्वाण्यम्भांसि शोणितान्यभवन्। तदा जलाधिपदूताद् एता- ५
दृशीं कथाम् अश्रौषं, हे प्रभो भवान् वर्त्तमानभूतभविष्यत्त्रिकालस्वरूपो
न्यायकारी च तस्माद् इत्थं न्यायं व्यचारयत्। यतो लोकास्तव पवित्र- ६
लोकानां भविष्यद्वादिनाञ्च शोणितम् अपातयन् तत्कारणात् त्वं तेभ्यः
शोणितं पातुम् अददाः तेऽपि तद्योग्या भवन्ति। तदनन्तरं वेद्याः समीपाद् ७

अपरैकदूतस्य कथामिमाम् अश्रौषं त्वं सत्यः, हे सर्व्वशक्तिमन् प्रभो पर-
मेश्वर तव दण्डाः सर्व्वे सत्या न्याय्याश्च।
८ पश्चाद् दहनेन मनुष्यान् दाहयितुं समर्थश्चतुर्थो दूतः स्वीयपात्रं
९ दिवाकरोपर्य्यवातारयत्। तेन मनुष्या अत्यन्तसन्तापेन दग्धाः सन्त
एतेषाम् उत्पातानां स्रष्टा य ईश्वरस्तस्य नाम निन्दित्वा तस्य गौरवं कर्त्तुं
मनांसि नैव परावर्त्तयन्।
१० अपरश्च पञ्चमोदूतः स्वीयं पात्रं तस्य पशोः सिंहासनोपरि समवा-
तारयत् तेन तस्य राज्यं सान्धकारम् अभवत्, एवं लोका वेदनायुक्तां स्वां
११ रसनाम् अदशन्। अपरं स्वेषां वेदनाभ्यः चतेभ्यश्च स्वर्गस्थेश्वरं निन्दित्वा
स्वीयकुकर्म्मभ्यो मनांसि न परावर्त्तयन्।
१२ ततःपरं षष्ठो दूतः स्वीयं पात्रं फरात्नामिकायां महानद्याम् अवा-
तारयत् तेन पूर्व्वदिक्स्थानां नरपतीनां मार्गकरणार्थं तस्याः सरित
१३ उदकानि पर्य्यशुष्यन्। पश्चात् तस्य नागस्य पशो र्मृषाभविष्यद्वादिनश्च
१४ मुखाद् मण्डूकवत् त्रीन् अपवित्रात्मनो निर्गतान् अपश्यम्। ते भूताः
सर्व्वशक्तिमत ईश्वरस्य महादिने युद्धार्थं पृथिवीस्थान् सकलभूपतीन्
१५ संग्रहीतुं तेषां समीपं गत्वाश्चर्य्यक्रियाम् अदर्शयन्। अपरम् इब्रि-
भाषया हर्मगिदोनामकस्थाने, अर्थात् मगिदोपर्व्वते तान् संगृह्या-
१६ मेलयत्। पश्याहं चौरवद् आगतोस्मि यो जनो जाग्रत् सन् निजवसनं
रक्षति स धन्यः स नग्नः सन् न भ्रमिष्यति लज्जास्पदश्च न भविष्यति।
१७ ततःपरं सप्तमो दूतः स्वं पात्रं नभोमध्येऽवातारयत् ततः समाप्तिरभवत्
१८ एष महाशब्दः स्वर्गीयमन्दिरात् सिंहासनाच्च निरगच्छत्। एवं शब्दो
मेघगर्जनं विद्युच्चाभवन् अन्यच्च सृष्टिम् आरभ्य यादृशं कोपि कदापि
१९ नापश्यत् तादृशो महान् घोरतरो भूमिकम्पोऽभवत्। तेन प्रधाननगरं
त्रिधा विभक्तम् अभवत्, एवं नानादेशानां नगराणि पतितान्यभवन
विशेषतो बाबिल्नामिकायै महानगर्य्यै निजप्रचण्डकोपमदिरापात्रं
२० दातुम् ईश्वरः समस्मरत्। एवं सर्व्वे उपद्वीपाः पलायनं कृतवन्तः

पर्व्वताश्चान्तर्हिता अभवन्। एवं मनुष्याणामुपरि गगणाद् एकैकद्रोण- २१
परिमितकरका अवर्षन्; एतस्याः करकावृष्टेः कारणात् लोका ईश्वरं
निन्दितुम् आरभन्त सोतीव महान् उत्पातो जातवान्।

---

१७ सप्तदशोऽध्यायः।

१ सप्तशीर्षदशशृङ्गविशिष्टस्य पशोरुपरि बाबिल्नामिकाया वेश्याया आरोहणं सप्त-
शीर्षदशशृङ्गानां तात्पर्य्यं तेषां दण्डनं ख्रीष्टस्य जयनञ्च।

तदनन्तरं तेषां सप्तपात्रधारिणां सप्तदूतानाम् एकः समीपम् आगत्य १
मया सार्द्धम् आलप्य कथितवान् अत्रागच्छ मेदिन्या नरपतयो यद् २
वेश्यया सार्क व्यभिचारकर्म्म कृतवन्तः, एवं धरणिनिवासिनो यस्या
लम्पटतामदिरापानेन मत्ता अभवन् तस्या उदकराश्युपर्य्युपविष्टायाः
प्रधानवेश्याया दण्डं त्वां दर्शयामि। ततः परम् स दूत आत्मनाविष्टं मां ३
मध्ये प्रान्तरम् अनयत् ततो निन्दानाम्ना परिपूर्णसिन्दूरवर्णसर्व्वशरीर-
सप्तमस्तकदशशृङ्गविशिष्टपशावुपविष्टां योषिदेकाम् अदर्शम्। सा नारी ४
धूसरसिन्दूरवर्णवसनपरिधायिनी सुवर्णमणिमुक्तादिभि र्विभूषिता
स्वीयव्यभिचारघृण्याशुचिद्रव्येण परिपूर्णं सुवर्णस्य पात्रमेकं तस्याः करे
विद्यते। एवं निगूढता प्रधानबाबिल् वेश्यानां पृथिव्या घृण्यक्रियायाश्च ५
जननी, एतानि नामानि तस्या भाले लिखितानि सन्ति। एवं पवित्र- ६
लोकानां यीशोः साक्षिणाञ्च शोणितेन मत्तां तां योषितं दृष्टवान्; अपरं
दृष्टायां सत्यां ममातिशयम् आश्चर्य्यज्ञानं जातम्। ततः स दूतो माम् ७
अवादीत् त्वं कुत आश्चर्य्यं मन्यसे तस्या योषितः, सप्तशीर्षदशशृङ्ग-
विशिष्टस्य तस्य योषितो वाहनस्य च निगूढतां त्वां ज्ञापयामि। त्वं यं ८
पशुं पश्यसि स पूर्व्वम् आसीत् किन्त्विदानीं नास्ति सोऽतलस्पर्शकुण्डात्
पुनरुत्थाय विनंक्ष्यति; आसृष्टिकालाज् जीवनपुस्तके येषां नामानि
लिखितानि न सन्ति ताद्दृशा धरणिनिवासिनो लोका भूतम् इदानीं
विद्यमानं भविष्यन्तञ्च पशुं विलोक्य विस्मयं मंस्यन्ते। यस्य बुद्धिरस्ति ९
स इदं बुध्यताम्। यस्योपरि सा योषिद् उपविशति तत् सप्तशीर्षाणि

१० भूधरास्ते सप्तभूधराश्च सप्तनृपतयः, तेषां पञ्चजनाः पतिता अभवन्
एको विद्यमानोऽस्ति, अपरम् इदानीं नोपतिष्ठति, उपस्थितेऽल्पक्षणं
११ स्थास्यति। यः पशुः भूत इदानीं न विद्यते सोऽष्टमः, एवं सप्तपशूनां
१२ मध्यादुत्पन्नः सन् विनंक्ष्यति। त्वं यानि दशशृङ्गानि दृष्टवान् ते दश
राजानः, तेऽद्यापि राज्यं न प्राप्नुवन्ति किन्तु पशुना साकं मुहूर्त्तैकेन
१३ राज्ञः सामर्थ्यं प्राप्स्यन्ति। ते एकमन्त्रणाः सन्तः स्वेषां सामर्थ्यं शक्तिञ्च
१४ पशवे दत्त्वा मेषशावकेन सार्द्धं योत्स्यन्ति। किन्तु मेषशावकस्तान् जेष्यति
यस्मात् स प्रभूनां प्रभुः, राज्ञां राजा, एवं ये तेन सार्द्धं तिष्ठन्ति त
१५ आहूता मनोनीता विश्वास्याश्च। पश्चात् स मह्यं पुनः कथितवान् त्वं
येषु तोयेषूपविष्टां वेश्यां दृष्टवान् तानि राज्यीयदेशीयभाषीयान् जन-
१६ निवहान् जानीहि। अपरं पशौ यानि दशशृङ्गानि दृष्टवान् तानि वेश्याम्
ऋतीयिष्यन्ते, एवं तां दीनां नग्नाञ्च कृत्वा तस्या मांसं भोक्ष्यन्ते
१७ तां वह्निना दाहयिष्यन्ति च। यावत् स्वीकं वाक्यं सफलं न भवति
तावद् ईश्वरः स्वमनोगतं साधयितुम् एकवाक्यान् कृत्वा तस्मै पशवे राज्यं
१८ दातुञ्च तान् प्रवर्त्तयिष्यति। अपरं त्वं यां योषितं दृष्टवान् सा धरण्या
राज्ञाम् उपरि अधिपतित्वकारिणी महानगरीति।

---

१८ अष्टादशोऽध्यायः।

१ बाबिलोऽधःपतनं तस्माद् ईश्वरस्य लोकानां निर्गमनं, तदर्थं राज्ञां वाणिज्य-
कारिणां पोतीयलोकानाञ्च विलपनं, ईश्वरस्य लोकानाम् आनन्दनं २१ बाबिलः
पतनं दृष्टान्तश्च।

१ तदनन्तरम् अहम् अपरमेकं महाबलवन्तं दूतं स्वर्गाद् अवरोहन्तम्
२ अदर्शं तस्य द्योत्या मेदिनी दीप्ताभवत्। ततः स महाशब्दं कृत्वा प्रोच्चैः
कथयितुम् आरभत, भूतानां वासस्थानं सर्व्वेषाम् अशुचिभूतानाम्
आवासो ऽपवित्रकुत्सितपक्षिणां पिञ्जरो या बाबिल्महानगरी सा
३ पतिताभूत् पतिताभूत्। यतः सकलदेशीयलोकास्तस्या व्यभिचाराज्
जातकोपमदिराम् अपायन्, एवं मेदिन्याः सर्व्वे नृपतयस्तया सार्कं

व्यभिचारकर्म्माकुर्व्वन्, अपरं तस्याः सुखभोगबाहुल्याद् धरण्या बणिजो
धनिनोऽभवन्। तदन्यं स्वर्गाद् उक्तम् एतं शब्दम् अश्रौषं, हे मदीयलोका ४
येन यूयम् एतद्बाबिलः पापानाम् अंशिनो न भवेत तदीयोत्पातेन
यस्माच्च न भवेत तदर्थं तस्या वहि र्भवत। तत्पापानि स्वर्गपर्य्यन्तम् उद- ५
तिष्ठन् एवं तद्दुष्कर्म्माणीश्वरोऽस्मरत्। सा युष्मभ्यं यादृग् अददात् ६
यूयमपि तस्यै तादृक् प्रतिदत्त, एवं तस्याः क्रियानुरूपं द्विगुणं प्रतिफलं
दत्त, अपरं सा यत् पात्रं परिपूर्णवती तत् पात्रं द्विः पूरयत। एवं
सा यति स्वगौरवम् अकरोत् सुखेन कालम् अयापयच्च तस्यै तति ७
यातनां शोकञ्च दत्त यस्माद् अहं विधवा न भवामि राज्ञी सती
विराजमाना विद्ये कदापि शोकञ्च न प्राप्स्यामि स्वीयमनसि कथामे-
तादृशीम् अकथयत्। अतएव एकदैव तां प्रतीमे सर्व्वे उत्पाता घटिष्यन्ते ८
वस्तुतस्तु मृत्युशोकदुर्भिक्ष्येषु घटितेषु शेषे वह्निना दग्धा भविष्यति
तस्या विचारयिता सर्व्वशक्तिमान् प्रभुः परमेश्वरोस्ति। अन्यच्च पृथिव्या ९
ये राजानस्तया सार्द्धं व्यभिचारकर्म्म सुखेन कालयापनञ्चाकुर्व्वन् ते
तस्या दहनस्य धूमं दृष्ट्वा क्रन्दिष्यन्ति विलपिष्यन्ति च। एवं तस्या यात- १०
नायाः साध्वसाद् दूरे दण्डायमाना एतां कथां कथयिष्यन्ति हा हा
महानगरी बाबिल् हे बलवन्नगरि एकदण्डात् तव दण्डोऽभवत्। एवं ११
मेदिन्या बाणिज्यकारिणस्तस्याः कृते क्रन्दिष्यन्ति विलपिष्यन्ति च यस्मात्
तेषां विक्रेयद्रव्याणि पुनः कोपि कदापि न क्रेष्यति। स्वर्णं रूप्यं मणि १२
मुक्ता सूक्ष्मवस्त्रं वार्त्ताकीवर्णसिन्दूरवर्णवस्त्रं पट्टवस्त्रं चन्दनादिकाष्ठं
हस्तिदन्तमयानि बहुविधपात्राणि महार्धकाष्ठस्य पित्तलस्य लौहस्य
मर्म्मरस्य च सर्व्वाणि पात्राणि, एवं दारुगन्धा धूपा मर्दनद्रव्यं गन्धरसो १३
मदिरा तैलम् उत्तमगोधूमचूर्णं गोधूमा गावो मेषा हया रथा दासा मान-
वानां प्राणा इत्यादीनि विक्रेयद्रव्याणि; अपरञ्च तदीयप्राणै र्वाञ्छितानि १४
सर्व्वफलानि यावन्ति सुस्वादूनि मनोहरद्रव्याणि तावन्त्येव त्वत्समीपाद्
गतानि त्वं पुनः कदापि तेषाम् उद्देशं न प्राप्स्यसि। अपरं तैस्तैर्द्रव्यैः १५

धनवन्तो ये जातास्ते सर्व्वे उत्तमर्णास्तस्या यातनाया भयाद् दूरे
१६ तिष्ठन्तः क्रन्दन्तो विलपन्तश्च कथयिष्यन्ति हा हा हे महानगरि त्वं
सूक्ष्मवसनै र्वार्त्ताकीयवर्णवसनैः सिन्दूरवर्णवसनैश्च युक्ता सुवर्णमणिमु-
क्ताद्यै र्भूषणैश्च भूषितासीः, किन्त्विदानीं दण्डैकमध्ये ताः सम्पत्तयो
१७ लुप्ताः। अपरं पोतानाम् अधिपतयः पोतधनस्वामिनो नाविकलोकाः
१८ सागरस्थवाणिज्यकारिण इमे दूरे तिष्ठन्तो नगरदाहस्योर्द्धगतं धूमं
विलोक्य प्रोच्चैः कथयिष्यन्ति एतादृश्या महानगर्य्याः सदृशी का परा
१६ नगरी विद्यते? इति वदन्तस्ते शिरःसु धूली र्दत्त्वा क्रन्दन्तो विलपन्तश्च
प्रोच्चैः कथयिष्यन्ति हा हा यस्या महानगर्य्या ऐश्वर्य्यैः सागरस्थिताः सर्व्वे
पोताधिपतयो धनवन्तो जाता एतादृशी नगरी दण्डैकमध्ये उच्छिन्ना-
२० भूत्। किन्तु हे स्वर्गीयलोका हे पवित्रप्रेरिता हे भविष्यद्वादिनो
यूयम् तद्विरुद्धम् आनन्दत यत ईश्वरो युष्मत्कृतेऽस्या एतादृशं समु-
चितदण्डं कृतवान्।

२१ अनन्तरम् एको बलवान् दूतो वृहत्पेषण्याः सदृशं पाषाणमेकं
गृहीत्वा सागरे निक्षिप्य कथितवान् अयमिव वृहती बाबिल्नगर्य्येषा
२२ बलाद् अधः क्षेप्स्यते पुनः कदापि तद्दृेशो न लप्स्यते। इतः परं वल्लकी-
वेणुतूर्य्यादिवादकास्त्वन्मध्ये पुनः कदापि वाद्यानि न वादयिष्यन्ति, एवं
वाणिज्याय कोपि शिल्पी त्वन्मध्ये नैव लप्स्यते, तथा पेषण्याः शब्दः
२३ कदापि त्वन्मध्ये न श्राविष्यते। अपरं प्रदीपालोकः पुनः कदापि त्वन्मध्ये
न दर्शिष्यते, तथा वरकन्ययोः शब्दः पुनः कदापि त्वन्मध्ये न श्राविष्यते
यस्मात् त्वदीयवणिकस्सु महीमध्ये मुख्येषु सत्सु त्वन्मायया सर्व्वदेशीय-
२४ लोका मोहं गताः। अपरञ्च भुवि यद् भविष्यद्वादिनां पुण्यवल्लो-
कानाञ्च वधोऽभूत् तत्सर्व्वेषां शोणितानि त्वन्मध्ये प्राप्यन्त।

## १९ ऊनविंशोऽध्यायः।

१ बाबिलवेश्याया दण्डार्थं स्वर्गीयलोकानां गानं, ख्रीष्टस्य मेषविवाहः;दूतभजन-
निषेधः ११ अधिपतीष्टदर्शनं १७ मांसभक्षखगाह्वानञ्च।

अनन्तरं स्वर्गाद् बहुजनैरुक्तम् इमं महाशब्दम् अश्रौषं,परमेश्वरं धन्यं. १
वदत यतः परित्राणमहिमसम्मानशक्तयः सर्व्वा अस्मत्प्रभुपरमेश्वरस्य।
तत्सर्व्वदण्डाः सत्या न्याय्याश्च यया महावेश्यया स्वव्यभिचारकर्म्मणा २
भूस्थसर्व्वजना अभ्रश्यन्त स तामदण्डयत् स्वसेवकरक्तपातप्रतिफलं तस्यै
अददाच्च। एवन्ते पुनरकथयन् परमेश्वरं धन्यं ब्रूत तेन तस्या धूमो नित्यम् ३
उदस्थात्। तत्पश्चात् ते चतुर्व्विंशतिप्राचीनचतुःप्राणिनो भुवि न्यङ्मुखाः ४
सिंहासनोपविष्टमीश्वरं प्रणम्याकथयन् इत्थं भवतु परमेश्वरं धन्यं ब्रूत।
ततःपरं तस्मात् सिंहासनाद् एष शब्दोऽभूत् हे ईश्वरसेवका हे तद्भीरवो ५
यूयं क्षुद्रा महान्तो वा सर्व्वेऽस्मदीश्वरं प्रशंसत। ततो बहूदककल्लोलघोर- ६
घनगर्जनशब्दमिवेमं जननिवहस्वनमश्रौषं, परमेश्वरं धन्यं ब्रूत सर्व्वशक्ति-
मत्प्रभुपरमेश्वरो राजत्वं करोति। अतो वयमानन्दोल्लासौ करवामहै तं ७
सम्मन्यामहै यतो मेषसुतविवाह उपास्थात् तत्पत्नी स्वां स्वमज्जयत्। एवं ८
पवित्रलोकानां पुण्यरूपनिर्म्मलसितसूक्ष्मवसनं परिधातुं तस्यै दत्तम्।
पश्चात् स मामित्यवादीत्,ये मेषशिशुविवाहीयभोज्याय निमन्त्रितास्ते ९
धन्या इति लिख पुन र्मामवोचत्, इमानीश्वरसत्यवचनानि। तदानी- १०
महं तं भक्तुं तच्चरणयोः पतितवान् ततः स मामकथयत्, अवधेहि
मा कुरु यादृशस्त्वं यीशोः साक्ष्यविशिष्टास्तव भ्रातरश्च तादृशोऽहमपि
युष्माकं सहदासोस्मि, ईश्वरं भजस्व; यतो यीशुमधिसाक्ष्यं भविष्य-
द्वाक्यानां सारम्।

तत्पश्चादहं पश्यन् पश्यन् स्वर्गद्वारे मुक्ते सति श्वेताश्वमेकं दृष्टवान् यस्त- ११
दुपर्य्यारूढवान् तं विश्वास्यं सत्यवादिनञ्च वदन्ति स न्याय्यत्वेन विचार-
यति युद्ध्यति च। तन्नेत्रे अग्निशिखावत्,शिरसि बहुकिरीटानि तत्र च १२
यन्नाम लिखितमस्ति तत् स्वं विनान्यो न वेत्ति। एवं रक्तमग्नं तत्परिधेयं १३
तन्नामचेश्वरवादः। ततः स्वर्गसैन्यानि निर्म्मलशुक्लसूक्ष्मवस्त्राण्विताानि १४

१५ श्वेताश्वरूढानि च तत्पश्चाद् गतानि। तदास्यान्निर्गततीक्ष्णखड्गेन स देशान्
प्रहरति लौहदण्डेन तान् शास्ति सर्व्वशक्तिमदीश्वरप्रचण्डकोपद्राक्षा-
१६ पेषणयन्त्रेण तान् दलयति च। एवं राज्ञां राजा प्रभूनां प्रभुरिति
नाम तत्सपरिच्छदजङ्घोपरि लिखितमस्ति।

१७ ततोऽहं रवौ तिष्ठन्तं दूतमदर्शं स नभस्युड्डीयमानान् सर्व्वपक्षिण उच्चैरित्य-
१८ वदत्, यूयं सर्व्वे ईश्वरमहाभोज्यमागत्य सभायां तिष्ठत, तथा राज्ञां सेना-
पतीनां विक्रमिजनानां हयानां तदारूढानां मुक्तबद्धक्षुद्रमहतां नृणां मांसा-
१९ नि च भक्षत। पश्चात् तद्घोटकारूढेन तत्सैन्यैश्च सह युद्धं कर्त्तुं पशुं ससैन्यं मही-
२० राजगणञ्च मिलन्तमदर्शम्। तेन स पशुस्तेन साकं यो मृषाभविष्यद्वक्ता
तत्साक्षाद् आश्चर्य्यकर्म्म कृत्वा पशुलक्ष्मधारिणस्तन्मूर्त्तिपूजकांश्च भ्रमित-
वान् तौ धृतावभूतां जीवन्तौ च वह्निगन्धकप्रज्वलितह्रदे न्यक्षिप्येतां।
२१ किन्तु शेषलोकास्तद्घोटकारूढास्यनिर्गतखड्गेन हताः; ततः खगा एत्य तेषां
पललैस्तृप्ताः।

---

२० विंशोऽध्यायः।

१ सहस्रवर्षं यावत् शैतानो बन्धनं, ४ आद्योत्थानं शैतानो मुक्तिः, योद्धुं जूजमा-
जूजयोर्मिलनं, तयोर्नाशः, शैतानो नरके निक्षेपः ११ विचारदिनकथनञ्च।

१ ततोऽहमतलस्पर्शकुण्डकुञ्जिकामहाशृङ्खलविशिष्टदूतं स्वर्गादवरो-
२ हन्तमदर्शम्। स दूतो नागनामकवृद्धसर्प्पम् अर्थाद् अपवादकशैतानं
धृत्वा सहस्रवर्षं यावत् बद्धवान् अगाधकुण्डे निक्षिप्य कुण्डास्यं बद्धवान्
३ मुद्राङ्कं च दत्तवान् तेन सहस्रवर्षेऽसम्पूर्णे सर्व्वदेशीयजनान् भ्रमयितुं न
शक्ष्यति ततोऽल्पकालं मोक्ष्यते।

४ पश्चादहं कियन्ति सिंहासनानि तदुपविष्टजनांश्चादर्शं तेभ्यो विचारभारो-
ऽदीयत तथा यीशुसाक्ष्येश्वरवाक्यकृते येषां शिरांसि छिन्नानि ये च
तं पशुं तन्मूर्त्तिञ्च नापूजयन् तल्लक्ष्म च भालकरयो र्नाधारयन् तेषामा-
त्मनोऽदर्शं ते सहस्रवर्षाणि जीविता ख्रीष्टेन साकं राजत्वं अकुर्व्वन्।
५ किन्तु सहस्रवर्षेष्वपूर्णेषु शेषा मृता नाजीवन् इतिप्रथमोत्थानम्। य एतद्

उत्थानांशिनो भवन्ति ते धन्याः पवित्राश्च तेषु द्वितीयमृत्योरधिकारो- ६
नास्ति त ईश्वरख्रीष्टयो र्याजका भविष्यन्ति सहस्रवर्षाणि तेन साकं
राजत्वं करिष्यन्ति च। सहस्रवर्षेषु गतेषु शैतान् तस्य कारातो मोक्ष्यते। ७
ततः स महीचतुर्दिक्स्थसिन्धुसिकतावदसंख्यजूजमाजूजानि सर्व्वराज्यानि ८
भ्रमयित्वा युद्धाय संग्रहीतुं वहि र्गमयिष्यति। तानि महीप्रस्थेनागत्य ९
पवित्राणां शिविरंप्रियनगरे अवरोत्स्यन्ति तदेश्वरात् स्वर्गनिर्गताग्निस्तानि
ग्रसिष्यति। यत्र च स पशुर्मृषाभविष्यद्वक्ता च स्तः तदग्निगन्धकह्रदे तेषां १०
भ्रान्तिकृत्शैतान् निक्षेप्स्यते तत्र तेऽनन्तकालदिवानिशं यातनां भोक्ष्यन्ते।

ततोऽहं शुक्लमहासिंहासनं तदुपविष्टजनञ्चादर्शं तत्सम्मुखाद् भूनभो- ११
मण्डले पलायेतां तदुद्देशः पुन र्नालभ्यत। ततोऽहं क्षुद्रान् महतो वा मृतान् १२
ईश्वरस्य सम्मुखे दण्डायमानान् दृष्टवान् पश्चात् सर्व्वपुस्तकानि मुक्तानि
विशेषाज्जीवनस्यान्यपुस्तकं मुक्तं, एवं पुस्तकेषु लिखितवचनैस्ते मृताः सर्व्वे
स्वस्वकर्म्मानुसारतो विचारिताः। सिन्धुस्थसर्व्वमृता निर्गता मृत्युपर- १३
लोकस्थाश्च वहिर्गतास्ततः स्वस्वकर्म्मानुसारात् सर्व्वे व्यचार्य्यन्त। पश्चात् १४
मृत्युपरलोकौ वह्निह्रदे निक्षिप्तौ द्वितीयमृत्युरेषः। जीवनपुस्तके यस्य १५
नाम न लिखितं सोऽग्निह्रदे न्यक्षिप्यत।

---

२१ एकविंशोऽध्यायः।

१ नव्यनभःपृथिव्यो र्दर्शनं २ नव्यधर्म्मपुरयिरूशालमो दर्शनं ९ तत्तेजश्चाकृति-धनसुखानां वर्णनञ्च।

ततोहं नव्यनभोमह्यौ दृष्टवान् पुर्व्वीयनभोमह्यौ लुप्ते सिन्धुश्च १
पुन र्नाभूत्।

अपरं वराय विभूषितां कन्यामिवाहं योहन् ईश्वरान्तिकात् स्वर्गा- २
न्निर्गतां नव्यधर्म्मपुरीं यिरूशालमम् अवरोहन्तीम् अदर्शम्। ततःस्वर्गादिमां ३
गम्भीरवाणीमश्रौषं पश्य नृणां मध्ये ईश्वरावास आस्ते तेषां मध्ये स वत्स्यति
ते च तल्लोका भविष्यन्ति सतु स्वयं तेषामीश्वरः सन् तैः साकं वत्स्यति।
एवमीश्वरस्तन्नेत्रसर्व्वाश्रु मार्क्ष्यति तेन कदापि मृति र्न भविष्यति शोक- ४

५ रोदनव्यथाश्च न भविष्यन्ति, इत्थं पूर्व्वीयसर्व्वे गताः। ततः स सिंहासनो-
पविष्टपुमानवदत् पश्याहं सर्व्वं नव्यं सृजामि पुन र्मामवादीत् लिख यत
६ इदं वचः सत्यं विश्वास्यञ्च। स पुनश्च मामवोचत् समाप्तं, अहं कः क्षश्चार्थो-
दाद्यन्तरूपो यः पिपासति तस्मायहं विनामूल्यं जीवनप्रस्रवणाम्बु पातुं
७ दास्यामि। यो जेष्यति स सर्व्वाण्यधिकरिष्यति; अहञ्च तदीश्वरो भवि-
८ ष्यामि स तु मत्पुत्त्रो भविष्यति। किन्तु ये भीताविश्वासिघृण्यकर्म्मनरहन्तृवेश्यागामिदेवार्च्चिमृषाभाषिणस्ते ऽग्निगन्धकज्वलितह्रदेऽधिकारं
लप्स्यन्ते द्वितीयमृत्युरयम्।

९ पश्चात् तत्सप्तशेषोत्पातपूर्णसप्तपात्रधारिसप्तदूतानामेको मदन्तिकमेत्य
१० मया समालप्यावदत्, अत्रेहि तन्मेषसुतोढस्त्रीं त्वान्दर्शयामि। ततः स
आत्मनाविष्टं मामुच्चवृहदद्रिं नीत्वेश्वरान्तिकस्वर्गनिर्गतधर्म्ममयमहा-
११ पुरीं यिरूशालममदर्शयत्। तत्पुर्य्यामीश्वरज्योतिरवर्त्तत तया तत्तेजस्तु
१२ महार्घरत्नवद् अर्थात् सूर्य्यकान्तमणिस्फटिकवन्निर्म्मलम्। तत्पुरीप्राचीरम्
अत्युच्चं वृहच्च तस्य पूर्व्वोत्तरदक्षिणपश्चिमदिक्षु त्रीणि त्रीणि द्वाराणि
१३ साकल्यतो द्वादशद्वाराणि सन्ति। तद् द्वादशद्वारेषु द्वादशदूताः सन्ति
१४ द्वारोपरीस्रायेल्वंशीयद्वादशगोष्ठीनामानि लिखितानि सन्ति। तत्प्रा-
चीरस्य द्वादशभित्तिमूलानि सन्ति तत्र मेषसुतस्य द्वादशप्रेरित-
१५ नामानि लिखितानि सन्ति। यो दूतो मया साकं कथोपकथनेऽकार्षीत्
१६ तद्धस्ते तत्पुरद्वारं प्राचीरञ्च मातुं स्वर्णदण्डोऽस्ति। तत्पुरं चतुःकोणं दीर्घ-
१७ प्रस्थयोः समानञ्च। तेन तद्दण्डेन तत्पुरे परिमिते द्वादशसहस्रशरपरि-
माणमभूत् तद् दीर्घप्रस्थोच्चैः समानम्। तत्प्राचीरे परिमिते मानुषस्यार्थात्
१८ तस्य दूतस्य चतुश्चत्वारिंशदधिकशतहस्तपरिमाणमभूत्। सूर्य्यकान्तमणि-
१९ निर्म्मितं तत्प्राचीरं तत्पुरञ्च शुद्धसुवर्णनिर्म्मितं निर्म्मलकाचसदृशं। प्राचीर-
२० भित्तिमूलानि मूल्यवन्नानारत्नै र्भूषितानि तेषां प्रथमभित्तिमूलं सूर्य्य-
कान्तस्य, द्वितीयं नीलस्य, तृतीयं तास्रमणेः, चतुर्थं मरकतस्य, पञ्चमं वैदु-
र्य्यस्य, षष्ठं शोणरत्नस्य, सप्तमं चन्द्रकान्तस्य, अष्टमं गोमेदस्य, नवमं पद्मरागस्य,

दशमं लशुनीयस्य,एकादशं पेरोजस्य द्वादशं मर्टीष्मणे विद्यन्ते। एकैक- २१
मुक्तानिर्म्मितमेकैकद्वारं, इत्थं द्वादशमुक्ताभि र्द्वादशद्वाराणि पुरस्य सर्व्व-
पथाः शुद्धस्वर्णभूषिताः काचवन्निर्म्मलाः। किन्तु तत्पुरमध्ये मन्दिरै- २२
कमपि मया न दृष्टं यतः सर्व्वशक्तिप्रभुपरमेश्वरो मेषशावकश्च तस्य मन्दि-
रम् आस्ते। दीप्त्यर्थं तत्पुरे दिवाकरनिशाकराभ्यां न प्रयोजनं, ईश्वरस्य २३
तेजसा तत्पुरं देदीप्यते तत्र मेषशिशु र्ज्योतिरस्ति। देशीयमुक्त- २४
लोकास्तज्ज्योतिषा यान्ति मह्या नृपाः स्वस्वैश्वर्य्यमहिमानौ तन्मध्यम्
आनेष्यन्ति च। तत्पुरस्य द्वाराणि दिवा कदापि न रुध्यन्ते तत्र निशा च २५
न भवति। लोकाः सर्व्वदेशानामैश्वर्य्यमहिमानौ तन्मध्यमानेष्यन्ति। किन्त्व- २६
पवित्रघृण्यातथ्यकर्म्मकृत् कोपि कदापि तन्मध्यं न प्रवेक्ष्यति येषां २७
नामानि मेषशिशोर्जीवनपुस्तके लिखितानि सन्ति तएव प्रवेक्ष्यन्ति।

---

## २२ द्वाविंशोऽध्यायः।

१ अमृतनदीनगर्य्यो दर्शनं,ईश्वरस्य लोकानां सुखं ६ दूतख्रीष्टयोः कथनं ८ दूतस्य स्वपूजानिषेधः १२ ख्रीष्टस्य कथनं १८ एतत्पुस्तकस्य न्यूनाधिककरणनिषेधः शुभप्रार्थनाच।

ततो दूत ईश्वरमेषशिशुसिंहासननिर्गतस्फटिकवन्निर्म्मलाम्बुनदीं १
माम् अदर्शयत्। तस्या नद्यास्तन्मार्गस्योभयपार्श्वे द्वादशविधफलदामृत- २
वृक्षोस्ति तद्वृक्षः प्रतिमासं एकैकफलं फलति तत्पत्रेण देशीयलोकानां
स्वास्थ्यं जायते। कदापि नाभिशापो भविष्यति किन्त्वीश्वरमेषशिशु- ३
सिंहासनं तत्रास्ति तत्सेवकाश्च तं सेविष्यन्ते। तद्वदनं पश्यन्ति भाले तन्नाम- ४
चिह्नं धारयन्ति च। तत्र रात्रि र्नास्ति प्रभुपरमेश्वरस्तेषां दीप्ति र्भवति ५
तेषां दीपसूर्य्याभ्यां प्रयोजनं नास्ति ते च नित्यं राजत्वं कुर्व्वन्ति।

पश्चात् स मामवदत् एताः कथाः सत्या विश्वास्याश्च पवित्रभविष्यद्वा- ६
दिनां प्रभुपरमेश्वरः स्वसेवकान् शीघ्रभाविघटना ज्ञापयितुं स्वदूतं
प्रेषितवान्। (यीशु र्वक्ति)पश्याहं शीघ्रमागच्छामि य एतत्पुस्तकस्य सर्व्व- ७
भविष्यद्वाक्यं पालयति स धन्यः।

८ अहं योहन् एतान्यदर्शम् अश्रौषञ्च दृष्ट्वा श्रुत्वा च यो दूतो मामेतान्य-
९ दर्शयत् तस्य भजनार्थं तत्पदतले पतितोऽहम्। तेन स मामकथयत्
अवधेहि मा कुरु, यतो यथा त्वं तव भविष्यद्वादिभ्रातर एत-
१० त्पुस्तकीयवाक्यपालकाश्च तथैवाहमपि सहदासैकः, ईश्वरं भजस्व। पुनः
स मामवदत् त्वम् एतत्पुस्तकस्य भविष्यद्वाक्यानि मुद्राङ्कितानि मा
११ कार्षीः समयो निकटवर्त्ती। योऽन्यायी सोऽन्यायी तिष्ठतु योऽशुचिः
सोऽशुचिस्तिष्ठतु यो धार्म्मिकः स धार्म्मिकस्तिष्ठतु यश्च पवित्रः स
पवित्रस्तिष्ठतु।
१२ पश्याहं (यीशुः) शीघ्रमायामि। एकैकमानुषं स्वस्वकर्म्मानुरूपफलं दातुं
१३ मयि पारितोषिकमस्ति। अहं कः क्षश्चार्थाद् आद्यन्तप्रथमशेषरूपः। ये
१४ तदाज्ञां पालयन्ति तएव धन्या यतस्तेऽमृतवृक्षमधिकरिष्यन्ति द्वारेण पुरं
१५ प्रवेक्ष्यन्ति च। किन्तु कुक्कुरइव मायाविवेश्यागामिनरहन्तृदेवार्च्चकमृषा-
१६ प्रियमृषोत्पादका लोकास्तद्वहि र्भविष्यन्ति। यीशुरहं समाजगणमध्ये
एतद्वाक्यानि प्रमाणीकर्त्तुं युष्मान् प्रति स्वदूतमप्रेषयम् अहं दायूदो मूलं
१७ फलम् उज्ज्वलप्रभातीयनक्षत्ररूपश्च। आत्मकन्ये कथयत आयाहि यश्च
शृणोति सोपि वदतु आयाहि यः पिपासति स आयातु य इच्छति स
विनामूल्यम् अमृताम्बु गृह्णातु।
१८ ये जना एतत्पुस्तकस्य भविष्यद्वाक्यं शृण्वन्ति तेषाम् एकैकजनाय
साक्ष्यं दत्वा कथयामि,यदि कश्चिदन्यवाक्येनैतद्वाक्यानि वर्द्धयति तर्हीश्वर
१९ एतत्पुस्तकलिखितोत्पातान् वर्द्धयित्वा तस्मै दास्यति। यदि कश्चिदे-
तद्भविष्यत्पुस्तकस्य कथां लुम्पति तर्हीश्वरो जीवनपुस्तकाद् धर्म्मपुराद्
२० एतत्पुस्तकलिखितवाक्याच्च तदंशं लोप्स्यति। य इतिवाक्यसाक्ष्यं ददाति
२१ स वक्ति द्रुतमहमेमि। तथास्तु प्रभो यीशो इत्यमेहि। युष्माकं सर्व्वान्
प्रत्यस्मत्प्रभुयीशुख्रीष्टस्यानुग्रहो भूयात्॥ इति॥